M. M. ŚIVAKUMĀRAŚĀSTRĪ-GRANTHAMĀLĀ

[Vol. 5]

# NYĀYAMAÑJARĪ

OF

JAYANTA BHAṬṬA

[PART THREE]

WITH THE COMMENTARY 'GRANTHIBHAṄGA'

*By*

CAKRADHARA

EDITED BY

GAURINATH SASTRI




VARANASI

1984

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

म० म० शिवकुमारशास्त्रि-ग्रन्थमाला

[पञ्चमं पुष्पम्]

जयन्तभट्टप्रणीता

# न्यायमञ्जरी

[ तृतीयो भागः ]

चक्रधरविरचितया

ग्रन्थिभङ्गव्याख्यया

संवलिता

सम्पादकः

श्रीगौरीनाथशास्त्री




वाराणस्याम्

२०४० तमे वैक्रमाब्दे    १९०५ तमे शकाब्दे    १९८४ तमे खैस्ताब्दे

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

प्रकाशक :–
निदेशकः, अनुसन्धानसंस्थानस्य,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी ।



प्राप्तिस्थानम् :–
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी - २२१००२ ।



प्रथमं संस्करणम्, ११०० प्रतिरूपाणि
मूल्यम्—३८.०० रूप्यकाणि



मुद्रकः–
रत्ना प्रिंटिग वर्क्स
बी २१/४२ ए, कमच्छा,
वाराणसी - २२१००१ ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

# PREFACE

## I

As announced earlier, we have much satisfaction in bringing out the third part of Nyāya-mañjarī of Jayanta Bhaṭṭa with the commentary 'Granthibhaṅga' by Cakradhara. This part contains four Āhnikas (ix-xii). Among the topics taken up in these four sections the discussion on 'Apavarga' is particularly striking.

## II

The conception of *apavarga* (or, *mokṣa*) according to Gotama, the author of the Nyāya-sūtras, is recorded in the aphorism, 'tadatyantavimokṣo' pavargaḥ', where 'tat' does not stand for pain (*duḥkha*) only but for all the eight-fold special qualities (*viśeṣaguṇa*) of the self (*ātman*), viz., knowledge, pleasure, pain, desire, aversion, effort, merit (*dharma*) and demerit (*adharma*) and the latent impressions (*saṁskāras*) as well. Merit and demerit stand as the two main pillars on which rests the structure of our empirical life and so long as they are not destroyed, we can hardly expect to reach the state of *apavarga*. And, this is because so long as they exist, continuity of birth cannot be stopped and emancipation eludes realization. The emergence of the body is occasioned by merit and demerit springing from desire or aversion that is brought about by error (*adhyāsa*). Error recedes in the background only when the knowledge of the reality (which is *ātman*) dawns. *Ātman* is different from the body, the senses, the vital breaths and the like. It is claimed that for the attainment of the said knowledge the Nyāya Śāstra is a most suitable medium.

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

Ordinarily any one of the special qualities of the self such as pleasure, pain, etc., is subject to destruction in the event of any other such quality following upon it. As such, these qualities cannot claim any permanence. Now, if pain by nature is not a permanent entity and one such is amenable to destruction with the appearance of any other, one may enquire, and rightly so, what Gotama has in his mind when he speaks of *ātyantikatva* in connection with its destruction. The answer is that Gotama's intention is that the destruction of pain will be such (i. e., *ātyantika*) when once destroyed it will cease to recur at any time in future. The number of pain is counted as twenty-one, relating to the body, the six senses, the six objects of the six senses, the six cognitions brought about by the six senses, pleasure and pain.

Jayanta Bhaṭṭa does not agree with the Vedāntins, who assert that *ātman* is eternal knowledge and bliss. For, if this view of the Vedāntins be accepted, it needs to be explained why that bliss is not experienced in the state of *saṁsāra*. Further, he enquires of them, why they hesitate to accept eternal body and eternal senses in the state of *apavarga* so that they can function in the way of affording bliss to the liberated soul. He thinks that in the absence of a body and the senses, there is hardly any possibility of eternal bliss in *apavarga*. However, if bliss be accepted as the nature of *ātman*, it is not understood why a spiritual aspirant should strive for its attainment. If it be urged that the association of a body and the senses does not necessarily create a situation for the enjoyment of the bliss which *ātman* is, it may be pointed out that senses etc. were created by God only to enable the individual selves to enjoy bliss and not to prevent them from enjoying it. Further, Jayanta does not agree with the teachers of Monistic Vedānta when they describe *avidyā* as a veil that shuts out the manifestation

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

of bliss inasmuch as *vairāgya* which is a non-entity can in no manner stand in the way of the functioning of an identity which to all intents and purposes is real. The example of clouds hiding the sun, according to him, cannot be cited in this context as it relates to identities that are both real.

Continuing Jayanta asks : desirelessness ( *vairāgya* ) is declared to be a must for an aspirant in his quest for *apavarga.* It cannot be held that happiness exists in that state, for the same being necessarily an object of desire will strike at the very root of *vairāgya* as a condition for the attainment of *apavarga.*

Proceeding further Jayanta discusses another point. It cannot be argued against the Naiyāyikas that if destruction of pain be the goal of human life one must learn to hate it first and then proceed to remove it to enable oneself to be rewarded with *apavarga.* It is pointed out by him that when one is fed up with *saṁsāra* one wants to get out of it. One does not seek *apavarga* out of hatred towards *saṁsāra.* One must discard both desire and hatred as they are opposed to *mokṣa.*

Jayanta repudiates the charge that if there is no pleasure in the state of *apavarga* it cannot be the goal of life to be aspired for. He thinks that there is hardly any proof for the admission of pleasure in *apavarga.* To the contrary, pleasure being invariably associated with pain cannot be separately enjoyed and, consequently, it can hardly be an object to be sought after.

Jayanta demurs to accept a view associated with the name of Bhartṛhari that in ordinary life pleasure is not a positive entity, but it is only the negation of pain. Jayanta points out that since we are told about different grades of pleasure for man, god and souls in *brahmaloka,* pleasure should be accepted as a positive entity.

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

Moreover, Jayanta urges that the discussion whether there is pleasure or not in *apavarga* is irrelevant, since the state of *apavarga* is one of resting in one's own nature, i. e., *ātman*. By nature, *ātman* is not bliss at all. He derives pleasure from enjoyment of the various objects presented by the senses. His original nature is inert.

## III

In the fitness of things we express our deep sense of gratitude to Paṇḍita Vibhūtibhūṣaṇa Nyāyācārya, Cūḍāmaṇi Professor, for the care he has taken in the preparation of the press copy as well as seeing this book through the press. Thanks are due to Paṇḍitarāja S. Subrahmaṇya Śāstrin for offering valuable suggestions for improvement of readings of the abstruse text.

**Gaurinath**

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

# न्यायमञ्जर्याम्

## उपोद्घातः

### न्यायमतसिद्धापवर्गः

"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति गौतमसूत्रेण तत्त्वज्ञानेन शरीरादौ आत्मत्वभ्रमस्य निवृत्तेः रागद्वेषादिहानपूर्वकं जन्मापायादपवर्गः। तदनन्तरमपवर्गो मोक्ष इति सूत्रेण तच्छब्दस्योपलक्षणतया बुद्ध्यादिनवविशेषगुणानां संस्कारस्य च नाश उक्तः। तथा च मोक्षे आत्मनि संङ्ख्यादिपञ्चकव्यतिरिक्तं न किञ्चित्तिष्ठति। यद्यपि मनो नित्यं तथापि पुरीतद्व्यतिरिक्तशरीरदेशावच्छिन्नात्मनस्संयोगाभावान्न ज्ञानाद्यन्यतमगुणोत्पत्तिर्मोक्षकाले। आत्यन्तिकत्वञ्च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वमिति प्रकरणेषु परिष्कृतं विद्यते।

न्यायमते पाषाणकल्पस्य जडावस्थात्मकस्य मोक्षस्य चेतनेनाकाम्यत्वान् न पुरुषार्थत्वमित्येतन्मञ्जरीकृता समाधीयते, स्वरूपावस्थानमेव हि मोक्ष उच्यते। स्वरूपञ्च सुषुप्त्यादौ प्रसिद्धं ज्ञानादिशून्यमात्मतत्त्वम्, तच्च जडम्, तद्भावो मोक्ष इति न विरुध्यते। माण्डूक्योक्ता तुर्यावस्था तु संवित्तिशून्या आत्मस्थितिरेव, न तु चैतन्यं वा सुखं वा, येन मोक्षे नित्यसुखनयः स्यादिति वेदान्तिमतं खण्डयति। भासर्वज्ञस्तु न्यायसारे (पृ० ५९५)—

कुतो मुक्तस्य सुखोपभोगसिद्धिरिति चेत्, आगमात्

"सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्।
तं वै मोक्षं विजानीयात् दुष्प्रापमकृतात्मभिः॥" इति च।

तथा "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन", "विज्ञानमानन्दं ब्रह्म" इत्यादिश्रुतिभ्यश्च। दुःखाभावमात्रे गौणमिदमिति चेन्न; विषयविशेषादानन्दविशेषानुभवस्य भावरूपं सुखं विनोपपादयितुमशक्यत्वात्। मुख्यार्थे बाधकाभावात्। निवृत्तभारस्यापि वातादिसम्पर्कादेव सुखोत्पत्तिदर्शनात्।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

न च सुखतत्संवेदनयोरुभयोरपि नित्यत्वान् मुक्तिसंसारयोरविशेष इति वाच्यम्, सुखतत्संवेदनयोः संसारावस्थायां विषयविषयिभावसम्बन्ध-प्रत्यनीकदुःखसद्भावान् न सुखसंवेदनम्; मुक्तौ तु भवति तत्संवेदनम् । न च सम्बन्धस्य जन्यत्वान् नाशः शङ्कनीयो ध्वंसवन्नित्यत्वात् । न च सादिभावस्य कथं नित्यता ? तादृशसम्बन्धस्य द्रव्यादिष्वनन्तर्भावाद् भावत्वासिद्धेः । कृतस्यापि विनाशकारणाभावान्नित्यत्वमेवेति ।

मोक्षस्तत्त्वज्ञानेन कर्मदाहात्साक्षादेव भवति "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इति गीता, तथा "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति श्रुतिश्च न यथाश्रुतार्थिन्यौ इति मञ्जरीकारः । यदाह,

विना फलोपभोगेन नहि नाशोऽस्ति कर्मणाम् ।
तेषां ज्ञानाग्निना दाह इति श्रद्धाविजृम्भितम् ।।
कार्यकारणभावो हि शास्त्रादेवावगम्यते ।
कर्मणाञ्च फलानाञ्च स कथं विनिवर्तताम् ।। इति ।

तदिदं निराकरोति, न तावद् ऋणप्रतिबन्धः, जायमानस्य तत्काले ऋणादानाभावाद् औपचारिकमिदं अवश्यकर्त्तव्यतासूचकोऽर्थवाद इत्याह ।

ज्ञानात्कर्मदाहवचनं भागवतमेवं व्याख्येयम् । न कर्मणां ज्ञानेन स्वरूपदाहः, अपि तु भृष्टानामिव बीजानां अङ्कुरकरणकौशलहानिः । कर्माणि मिथ्याज्ञानेन दोषैश्च सहितानि फलं जनयन्ति । तत्त्वज्ञानेन मिथ्या-ज्ञाने नष्टे, तेन च रागद्वेषमोहाभावे न शरीरमारभत इत्यर्थः । तदुक्तम्, अविद्यातृष्णे धर्माधर्मौ च जन्मकारणमिति ।

### शरीरव्यतिरिक्तात्मज्ञानस्योपयोगः

षोडशपदार्थनिरूपणस्य किं प्रयोजनमित्याकाङ्क्षायामक्षपादसूत्रं षोडश-पदार्थज्ञानान्निःश्रेयसाधिगम इति । अत्र निःश्रेयसं मोक्षः, तस्य पदार्थज्ञानात् कथं प्राप्तिरित्यनुयोगे सूत्रं दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग इति । तत्त्वज्ञानञ्च आत्मनः शरीरादिभिन्नत्वेन ज्ञानं तेन शरीरमेवात्मेति ज्ञाननाशस्तेन रागादिनाशपरम्परया जन्मनाशरूपोऽपवर्ग इत्युक्तं भवति ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अत्र मीमांसकैरपि परलोकसाधनभूतेषु कर्मसु प्रवृत्तये शरीरादिभिन्नः परलोकगमनसमर्थः कश्चिदात्मा अपेक्षितः। स च न वेदान्तसंवेद्यः, तस्य निर्गुणत्वात् कर्माधिकारोच्छेदापत्तेः। तथा च बादरायणीयं सूत्रम् "उपमर्दं चे"ति।

नैयायिकसमर्थित आत्मा कर्तृत्वादिधर्मकत्त्वात् पारलौकिकफलककर्मसु प्रवृत्तये आवश्यकः, तार्किकात्मज्ञानस्योपयोगेन तत्रैव क्षीणत्वात् कथं तस्य मोक्षहेतुता इत्याक्षेपे प्राप्ते जयन्तभट्टः, तदिदमनुपपन्नम्, ततोऽन्यत एव सिद्धत्वात् प्रत्यभिज्ञाप्रत्यक्षेण जैमिनीयैः अनुमानेन च तादृशात्मा सिद्ध्यत्येव; तेनैव कर्मसु प्रवृत्तेरुपपत्तौ आत्मा ज्ञातव्य इति विधिः आत्मज्ञानान्मोक्ष इति गौतमवचनञ्च निरर्थकं स्यात्। अत आत्मज्ञानस्य तार्किकोक्तस्य मोक्षसाधनत्वमेव, न तु कर्मसु प्रवर्तकत्वमिति तस्य अर्थवादसमर्पितापुनरावृत्तिसाधकत्वमेव।

अन्ये तु य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्य इति विधिरेव तादृशात्मस्वरूपज्ञानस्य परमपुरुषार्थतामवगमयन्नस्य पूर्वोक्तार्थवादनिरपेक्षतामापादयतीत्याहुः।

अपि च आधानविधिः अध्ययनविधिश्च न कामप्रयुक्तौ; अपि तु संस्कारविधायकौ। संस्कृताग्नेः संस्कृतस्वाध्यायस्य च कर्मणि अर्थज्ञाने वा उपयोग इष्यते, एवमेव अपहतपाप्मस्वरूपात्मज्ञानविधिस्तथाविधात्मस्वरूपेणावस्थानमपवर्ग इति बोधयति, न तत्र फलाकाङ्क्षा। आत्मैव परोपजनितधर्मरहितोऽपवर्ग इति ततोऽवगमादित्याहुः।

अत्राद्वैतवादः श्रीमण्डनमिश्रविरचितब्रह्मसिद्ध्यनुसारेणोपपाद्य सङ्ग्रहेणैवं खण्ड्यते। अविद्या सती उतासती? तत्राद्ये मोक्षकालेऽपि मोक्षाभावः। असत्त्वे सर्वव्यवहारानुपपत्तिरिति। अद्वैतिनस्तु व्यवहारोऽपि काल्पनिकोऽविद्यानिवर्तकज्ञानमप्याविद्यकं निवृत्तिरपि काल्पनिकीत्याहुः।

वाक्यपदीये हरिणा प्रोक्तः शब्दाद्वैतवादोऽप्यत्र निरस्यते। तदित्थम्। यदि शब्दादभिन्नोऽर्थः अपरोक्षतया प्रतिभाति, कोऽर्थः अध्यासेन? कस्त्वया

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

दृष्टोऽर्थः ? गौरिति कीदृशं ते ज्ञानं ? गौरिति कीदृशोऽर्थः ? गौरिति कीदृशं शब्दं प्रयुक्तवानसि ? गौरिति इति सर्वेषां प्रश्नानामेकरूपसमाधानेन तेषामैक्यभ्रान्तिः । वस्तुतस्तु—

गवि सास्नादिमद्रूपा गादिरूपाऽभिधायके ।
निराकारोभयज्ञाने संवित्तिः परमार्थतः ।। इति ।

यदि शब्दः स्वरूपेणार्थं प्रत्याययति अक्षशब्दस्यैक्याद् देवनविभीतकाक्षेषु तुल्या प्रतीतिः स्यात्, न च दृश्यते । तस्मादिदमयुक्तमिति ।

अपि च शब्दस्य सिद्धरूपत्वाद् अर्थस्य तत्राध्यासाश्रयणे यजेत दद्यात् जुहुयात् इत्यादौ साध्यार्थानां यागादीनां शब्दोच्चारणकाले असत्त्वान् न किञ्चिदवगम्येत । पर्यायेषु हस्तः करः पाणिः इत्यादिषु शब्दस्वरूपविशेषेष्वध्यासेऽर्थबुद्धिभेदः स्यात् ।

अपि च शब्देऽर्थाध्यासे स्वसामर्थ्यादेव जायमाने शब्दार्थसम्बन्धज्ञानानपेक्षाप्रसङ्गः । अपि च अध्यासो लोके सादृश्यरागाद्यधीनो दृश्यते शब्देषु अर्थाध्यासे तदभावादध्यासानुपपत्तिः ।

प्रतिबिम्बवर्णनमप्ययुक्तं दूरस्थयोः शब्दार्थयोस्तदसम्भवात् ।

### शब्दविवर्तवादः

सोऽप्ययुक्तः शुक्तिरजताध्यासे चाकचक्यादिदोषाद् रजतावभासः शब्दे तु न तादृशं सादृश्यादि । अतः शब्दाद्वैतवादोऽप्ययुक्तः ।

### अवयवसंख्यायां विप्रतिपत्तिः

कुमारिलभट्टैः "उदाहरणान्तं वा यद्वोदाहरणादिकम्" इत्युक्तेः प्रतिज्ञाहेतूदाहरणानि । अथवा उदाहरणोपनयनिगमनानि इति पक्षद्वयं त्र्यवयवं परार्थानुमानमुक्तम् । तार्किकैरपि इदं क्वचिदनुस्रियत एव यथा सिद्धान्तलक्षणदीधितौ यदा गोत्वं तदा गौरित्यत्रातिव्याप्तिः, यदा स्पन्दस्तदा द्व्यणुकम्, यदा यस्यादृष्टं तदा तदीयं ज्ञानमित्यादावतिव्याप्तिरिति । प्रतिज्ञाहेतू विना उदाहरणं प्रथमत उच्यमानं त्र्यवयवपक्षं सूचयति । वेदान्तेऽपि ब्रह्मसूत्रभाष्ये शास्त्रयोनित्वाधिकरणे यद्यद्विस्तरार्थं शास्त्रं यस्मात् पुरुषविशेषात्

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

सम्भवति यथा व्याकरणादि पाणिन्यादेः, स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके इति ।

## संशयविचारः

अत्र विप्रतिपत्तिवाक्यद्वयात् कथं संशयः प्रत्यक्षातिरिक्तप्रमाणानां निश्चयमात्रजनकत्वस्वाभाव्यादिति प्रश्ने न्यायमञ्जरीकारः प्राचीनसम्मतरीत्या कोटिद्वयोपस्थापकं विप्रतिपत्तिवाक्यद्वयम्, उपस्थित्या संशयोत्पत्तिरित्येवं मन्यते । गदाधरभट्टाचार्यास्तु पर्वतो वह्निमान् न वेत्यादिविप्रतिपत्तितः साक्षादेव संशयो जायत इति मतान्तरमनुक्रम्य वह्नितदभावविषयकसंशयः वह्निमान् न वेति वाक्यादेव जायते मतुपः सार्थक्यमतेऽपीत्याहुः । आह च दीधितिकारः——आहत्यैव विप्रतिपत्तिवाक्यजन्मानं संशयमाहुरिति ।

## केवलव्यतिरेकी

केवलव्यतिरेकी नास्ति अर्थापत्तेरेव तत्कार्यकारित्वसम्भवेन वैयर्थ्यादिति वेदान्तपरिभाषा । साध्याभावनिष्ठा हेत्वभावव्याप्तिः कथं साध्यसाधिका स्यात् । अतो हेतुनिष्ठत्वाभावान्न व्यतिरेकव्याप्तिरिति च वदन्ति ।

भट्टश्च श्लोकवार्त्तिके व्यतिरेकव्याप्तिं साध्यासाधकत्वेन निराकरोति ।

भट्टजयन्तस्तु इत्थं व्यतिरेकव्याप्तिं समर्थयते । न वयं शुष्कमेव केवलव्यतिरेकिणं क्वचित् साध्यविशेषे विशेषणविशेषवत् हेतुमुपगच्छामः । अपि तु अन्वयव्यतिरेकिहेतुरेव क्वचित् केवलव्यतिरेकतामवलम्बित इति ब्रूमः । यत्र केवलपरोक्षस्यात्मनः सिद्धौ यथा ज्ञानादिकमष्टद्रव्यातिरिक्तद्रव्याश्रितम्, अष्टद्रव्यानाश्रितत्वे सति गुणत्वादित्यादौ यत्रातिरिक्तद्रव्याप्रसिद्धिस्तत्र इतरेषां जडत्वेन ज्ञानानाश्रयत्वनिश्चयात् तदतिरिक्तात्माश्रयत्वानुमानम् । वेदान्तिनश्च व्यतिरेकव्याप्तिं बाहुल्येनोपयुञ्जते । तथा हि तत्त्वप्रदीपिकायाम्, अनुभूतिः स्वप्रकाशा अनुभूतित्वात्, यन्नैवं तन्नैवं यथा घटः । विवादपदमनिर्वाच्यम्, भ्रमविषयत्वात्, यन्नैवं तन्नैवं यथा आत्मा । अयं चन्द्र इति व्यवहर्तव्यः प्रकृष्टत्वे सति प्रकाशत्वात्, यन्नैवं न तदेवं यथा नक्षत्रादि, इत्यादि ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

तस्माच्छास्त्रकारैरनुमतमेव व्यतिरेक्यनुमानम् । व्यतिरेकव्याप्तेः प्रकृत-हेतुनिष्ठत्वमेवं व्युत्पादयन्ति, साध्याभावव्यापकाभावप्रतियोगित्वं व्यतिरेक-व्याप्तिरित्युक्तौ तस्या उक्तरूपत्वेन, यद्वा साध्याभावनिष्ठायास्तस्याः स्वाश्रय-व्यापकीभूताभावप्रतियोगित्वसम्बन्धेन प्रकृतहेतुनिष्ठत्वमिति । तस्मात् व्यति-रेक्यनुमानाभ्युपगमे न कश्चिद्दोषः ।

## जातिः

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः इति सूत्रम् । तत्र प्रत्यवस्थानं नाम प्रातिकूल्येनावस्थानम्, स चाक्षेप एव । जातिपदेन जन्मोच्यते । परप्रयुक्तहेतौ श्रवणमात्रेण जायमानमसदुत्तरं जातिरिति यावत् । असदुत्तरं जातिरिति संक्षिप्तं लक्षणम् । तत्र उत्तरस्यासत्त्वं स्वपरासाधकत्वम् । श्रीवर्धमानोपाध्यायाः स्वीये अन्वीक्षानयतत्त्वबोधे स्वासाधकताप्रयोजक-रूपवता परासाधकतासाधकमुत्तरं जातिरित्यूचुः । तथाहि, जात्युत्तरं येन रूपेण परकीयां स्थापनां व्याहन्ति, तेनैव रूपेण स्वानुमानमपि इति स्वव्याघातकमुत्तरं जातिः । अत एव बौद्धप्रयोगः, घटादिप्रत्यया निरा-लम्बनाः प्रत्ययत्वात् स्वप्नप्रत्ययवत् इत्यनुमानं जातिः, स्वस्यापि निरा-लम्बनत्वेन स्वपरव्याघातकत्वात् ।

ननु हेत्वाभासानामसाधकतासाधकत्वेन 'ह्रदो वह्निमान् धूमात्' इति न्यायप्रयोज्यमनुमानं बाधनिश्चयेनासाधकं भवति असदुत्तरत्वज्ञानस्य कथमसाधकतासाधकत्वमिति चेत्, न, अस्यापि भ्रमकाले पक्षे साध्यज्ञान-जनकत्वात् । न च तत्त्वाज्ञानदशायां पक्षे साध्यभ्रमो जायत इति वाच्यम्, ज्ञानदशायामपि पक्षे साध्यज्ञानाजनकत्वप्रयोजकमेवासाधकताज्ञानं यतः ह्रदो वह्निमान् जलादित्यादौ विरोधज्ञानस्य तदभावावच्छेदकधर्मदर्शन-विधया प्रतिबन्धकत्वाद् असाधकताज्ञानमनुमितिं प्रतिबध्नाति ।

अत्र च प्रतिदृष्टान्तसमस्योत्तरेण सूचिता अनवस्था । सा च कथं प्रकृत-साध्यसिद्धिं प्रतिबध्नाति इति विवृतमस्मिन् सन्दर्भे श्रीवर्धमानोपाध्यायैः ।

तथाहि, अनवस्थानसजातीयस्य सजातीयान्याङ्गीकारो बाधकस्तर्क इति न वक्तव्यम्, आत्माश्रयेऽतिव्याप्तेः स्वभिन्नेति सजातीयविशेषणे

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अन्योन्याश्रयेऽतिव्याप्तेः । किन्तु प्रतिपत्तिप्रयोजकरूपवत्त्वेनापाद्यापादनम् अनवस्था । सा च उत्पत्तौ ज्ञप्तौ च प्रसिद्धा । उत्पत्तौ तावत्, कारणे किं कारणं व्यवस्थापकमिति प्रश्नः । ज्ञप्तौ तु प्रमाणमिति प्रमाणं तत्रापि किं प्रमाणमिति । एवं दृष्टान्तेऽपि को दृष्टान्त इत्यादि । एवं प्रश्नपरम्पराया निर्दोषत्वे क्वापि कथापर्यवसानं न स्यात् । ततश्च फलापर्यवसानात् कथारम्भानुपपत्तिः ।

ज्ञप्तौ तु अनिश्चितस्यानिश्चायकत्वात् निश्चयानुपपत्तिः । उत्पत्तौ कारणस्यापि कारणं वाच्यम् । न हि तत् नित्यमाकस्मिकं वा कारणापर्यवसाने वस्तुनो नित्यत्वापत्तेरिति ।

### निग्रहस्थानञ्च

कथकोद्देश्यककथाफलप्रयोजककथाहेतुयथार्थज्ञानविरहलिङ्गत्वमिति वर्धमानोपाध्यायाः । कथात्वञ्च न नानावक्तृकविचारविषयकवाक्यसमूहत्वम् । यथाश्रुते एकस्यापि वाक्यस्य नानावक्तृकत्वाभावेनासम्भवापत्तेः । वस्तुतस्तु वादिसाधनाभिधानप्रतिवादिदूषणाभिधानान्यतरत्वं तत् ।

न्यायशास्त्रे वितण्डाछलजातिनिग्रहस्थानानां निरूपणं तत्त्वसंरक्षणाय, वितण्डादिनापि धर्मविरोधी जेतव्य इति । तदुक्तं महर्षिणा तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवदिति । पराक्रान्तञ्चात्र श्रीजयन्तभट्टेन ।

वाराणस्याम्,
महाशिवरात्रिपर्वणि,
वि० सं० २०४०

विदुषां वशंवदः
**सम्पादकः**

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

## विषयसूचिका



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

॥ श्रीः ॥

# न्यायमञ्जरी

## [ नवममाह्निकम् ]

### अपवर्गपरीक्षा

एवं शरीरादौ दुःखपर्यन्ते हेये प्रमेये निर्णीते यदर्थमेतदुपदेशो यत् परमुपादेयं प्रमेयम्, यदर्थः शास्त्रारम्भस्तमपवर्गं लक्षयितुमाह—

**तदत्यन्तविमोक्षोऽपवर्गः ।**

तदिति प्रक्रान्तस्य दुःखस्यावमर्शः । न च मुख्यमेव दुःखं बाधनास्वभावमवमृश्यते, किन्तु तत्साधनं तदनुषक्तञ्च सर्वमेव । तेन दुःखेन वियोगोऽपवर्गः । अस्ति प्रलयवेलायामात्मनो दुःखवियोगः, स तु अपवर्गो न भवति, सर्गसमये पुनरक्षीणकर्माशयानुरूपशरीरादिसम्बन्धे सति दुःखसम्भवात्, अतस्तद्व्यावृत्त्यर्थमत्यन्तग्रहणम् । आत्यन्तिकी दुःखव्यावृत्तिरपवर्गो न सावधिका । द्विविधदुःखावमर्शिना सर्वनाम्ना सर्वेषामात्मगुणानां दुःखवदवमर्शात् । अत्यन्तग्रहणेन च सर्वात्मना तद्वियोगाभिधानान् नवानामात्मगुणानां बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां निर्मूलोच्छेदोऽपवर्ग इत्युक्तं भवति ।

यावदात्मगुणाः सर्वे नोच्छिन्ना वासनादयः ।
तावदात्यन्तिकी दुःखव्यावृत्तिर्नावकल्पते ॥
धर्माधर्मनिमित्तो हि सम्भवः सुखदुःखयोः ।
मूलभूतौ च तावेव स्तम्भौ संसारसद्मनः ॥
तदुच्छेदे तु तत्कार्यशरीराद्यनुपप्लवात् ।
नात्मनः सुखदुःखे स्त इत्यसौ मुक्त उच्यते ॥
इच्छाद्वेषप्रयत्नादि भोगायतनबन्धनम् ।
उच्छिन्नभोगायतनो नात्मा तैरपि युज्यते ॥

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

प्राणस्य क्षुत्पिपासे द्वे लोभमोहौ च चेतसः ।
शीतातपौ शरीरस्य षडूर्मिरहितः शिवः ॥

तदेवं नवानामात्मगुणानां निर्मूलोच्छेदोऽपवर्ग इति यदुच्यते, तदेवेदमुक्तं भवति तदत्यन्तवियोगोऽपवर्ग इति ।

**अपवर्गे जीवात्मस्थितिः**

ननु तस्यामवस्थायां कीदृगात्मावशिष्यते ।
स्वरूपैकप्रतिष्ठानः परित्यक्तोऽखिलैर्गुणैः ॥
ऊर्मिषट्कातिगं रूपं तदस्याहुर्मनीषिणः ।
संसारबन्धनाधीनदुःखक्लेशाद्यदूषितम् ॥

**वेदान्तवादिमतेऽपवर्गस्वरूपम्**

तत्र वेदान्तवादिन आहुः, नायमीदृशो मोक्षः प्रेक्षावतां प्रयत्नभूमिर्भवितुमर्हति, को हि नाम शिलाशकलकल्पमपगतसकलसुखसंवेदनसम्पदमात्मानमुपपादयितुं यतेत ? सोपाधिसावधिकपरिमितानन्दनिःष्यन्दात् स्वर्गादप्यधिकमनवधिकनिरतिशयनैसर्गिकानन्दसुन्दरमपरिम्लानतत्संवेदनसामर्थ्यं चतुर्थं पुरुषार्थमाचक्षते विचक्षणाः । यदि तु जडः पाषाणनिर्विशेष एव तस्यामवस्थायामात्मा भवेत्, तत् कृतमपवर्गेण, संसार एव वरमवस्थानम्, यत्र तावदन्तरान्तरापि दुःखकलुषितमपि स्वल्पमपि सुखमुपभुज्यते । चिन्त्यतां तावदिदं किमल्पसुखानुभवो भद्रकः, उत सर्वसुखोच्छेद एव । तस्मान्नित्यसुखम् आत्मनो

---

**ऊर्मिषट्कातिगमिति** । अशनायापिपासाशोकमोहजरामृत्युरूप ऊर्मिषट्कः, तमतिक्रमेण स्थितम् । ईश्वराव्याकृतप्राणविराट्भूतेन्द्रियाख्या ऊर्मयः । परस्य ब्रह्मणो ज्ञानक्रियायोगेन सिसृक्षोः स्थितिरीश्वराख्योर्मिः, तस्यैव सत्त्वरजस्तमोरूपतया यदवस्थानं तदव्याकृतत्वम् । तदेव प्राणरूपेण बोधनाद् बुद्धिः प्राणाख्योर्मिः । तस्यैवाहमित्यवमर्शोऽहङ्कारो 'विराट्' शब्दवाच्यः । तस्यैव स्थूलरूपपृथिव्यात्मना स्थितिर्भूताख्योर्मिः । इन्द्रियाणि बुद्धिकर्मविभागेनैकादशम्, तद्रूपेणावस्थानमिन्द्रियाख्योर्मिः ।

**सोपाधिसावधिकेति** । अप्सरःप्रभृतिपदार्थदर्शनोपभोगाद्युपाधिजन्यः । कर्मक्षयपर्यन्तत्वाच्च सावधिः ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

महत्त्ववदस्तीत्यागमप्रामाण्यादुपगम्यताम् । तच्च संसारदशायामविद्यावरणवशेन नानुभूयते, तत्त्वज्ञानाभ्यासभावनाभिभूतनिरन्तराविद्यावरणस्त्वात्मा तस्यामवस्थायां तदनुभवतीति ।

**तन्मतखण्डनम्**

तदिदमनुपपन्नम्, आत्मनो नित्यसुखसत्तायां प्रमाणाभावात् । प्रत्यक्षं तावदस्मदादीनामन्येषां वा केषाञ्चिदस्मिन्नर्थे न प्रभवतीति केयं कथा ? अनुमानमपि न सम्भवति, लिङ्गलेशानवलोकनादिति ।

ननूक्तमेवानुमानम्, अपवर्गाय यः प्रेक्षावतां प्रयत्नः सुखसिद्धये हि बुद्धिमन्तो यतन्ते, नाश्मकल्पमात्मानं कर्तुमिति तदयमिष्टाधिगमार्थो मुमुक्षोः प्रयत्नः प्रेक्षापूर्वकारिप्रयत्नत्वात् कृष्यादिप्रयत्नवदिति ।

नानिष्टोपरमार्थत्वादनिष्टस्यापि शान्तये ।
सन्तः प्रयतमाना हि दृश्यन्ते व्याधिखेदिताः ।।

अतिदुर्वहश्चायं संसारदुःखभार इति तदुपशमाय व्यवस्यन्तः सन्तो न निष्प्रयोजनप्रयत्ना भवन्तीत्यनैकान्तिको हेतुः ।

अथागमादवगम्यते विभुत्वेनेव नित्येन सुखेनाविनाकृत आत्मेति, तथा च पठ्यते 'विज्ञानमानन्दं ब्रह्म' इति स्यादेतदेवं यद्येतदेव केवलमागमवचनमश्रोष्यत वचनान्तरमपि तु श्रूयते 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः' इति ।

**श्रुतिवाक्यानां द्वैतवादानुसारिणी व्याख्या**

ननु भवत्पठितमागमवचनमन्यथापि व्याख्यातुं शक्यते । सशरीरस्येति प्रक्रमात् सांसारिके सुखदुःखे अनुकूलेतरविषयोपलम्भसम्भवे तदानीमशरीरमात्मानं न स्पृशत इत्यर्थः । हन्त तर्हि त्वदधीतमपि वेदवचनम् 'आनन्दं ब्रह्म'

---

**विभुत्वेनेव नित्येन सुखेनावियुत आत्मेति ।** अनेन श्रौतावानन्दब्रह्मशब्दौ व्याख्यातौ ।

**विज्ञानम् ।** विज्ञानस्वभावं नित्यविज्ञानात्मकमित्यर्थः ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

इति संसारदुःखपरिहारक्रमे प्रकरणादेव तद्दुःखापायविषयं व्याख्यास्यते, न खलु व्याख्यानस्य भगवतः काचिद् भूमिरस्ति, दृष्टाश्च दुःखोपशमे सुखशब्दप्रयोगाः ।

चिरज्वरशिरोर्त्त्यादिव्याधिदुःखेन खेदिताः ।
सुखिनो वयमद्येति तदपाये प्रयुञ्जते ।।

**नित्यसुखनिरासः**

यदि च आनन्दमिति वचनान्नित्यं सुखमात्मन इष्यते, तर्हि ब्रह्मेति वचनाद् व्यापकत्वमिव विज्ञानमिति वचनाज् ज्ञानमपि नित्यमस्याभ्युपगन्तव्यमतश्च सुखवज् ज्ञानस्यापि नित्यत्वात् संसारेऽपि नित्यसुखोपलब्धिः स्यात्, ततश्च धर्माधर्मफलाभ्यां सुखदुःखाभ्यामस्य नित्यस्य सुखस्य साहचर्यमनुभूयेत ।

अपि च,

सुखवज् ज्ञानवच्चास्य कामं देहेन्द्रियाद्यपि ।
नित्यं प्रकल्प्यतामित्थं मोक्षो रम्यतरो भवेत् ।।

अथ कार्यं सुखज्ञानं हेतुरस्य चिन्तनीयो यत उत्पद्यत इति वाच्यम्, योगसमाधिज इति चेत्, तस्य कार्यत्वात् स्वकार्यसुखसंवेदनावसानत्वान्न शाश्वतिकत्वं स्यात् । अप्रक्षयश्च धर्मस्य निरनुमानकः, न हि योगसमाधिजो धर्मो न क्षीयत इत्यत्र किञ्चिदनुमानमस्ति, विपर्यये तु प्रसिद्धमेवानुमानं सर्वस्य कृतकस्यानित्यत्वदर्शनादिति । क्षीणे तु धर्मे तत्कार्यज्ञानाभावात् सदपि सुखमनुपलभ्यमानमसतो न विशिष्यते । स्वप्रकाशं तत्सुखमिति चेत्, संसारेऽपि तदुपलब्धिप्रसङ्गः । शरीरादिसम्बन्धः प्रतिबन्धहेतुरिति चेत्, न, शरीरादीनामुपभोगार्थत्वाद् भोगप्रतिबन्धं विदधतीति न साध्वी कल्पना । अविद्यावरणात् संसारे स्वप्रकाशसुखानुपलम्भ इति चेत्, न, प्रकाशस्य तुच्छेनावरीतुमशक्यत्वात्, नहि प्रकाशरूपं पारमार्थिकमात्मनः सुखं तद्विपरीततुच्छस्वभावेयमविरलगवलमलीमसं बलाहकव्यूहपिहितरविबिम्बं तदपि न रजनीसदृशं दिनमिति सहसा मोहमहिमा ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

मेघा अपि रवेरन्ये स्वरूपेण च वास्तवाः ।
तत्त्वान्यत्त्वाद्यचिन्त्या तु नाविद्यावरणक्षमा ॥

तस्माद् न नित्यानन्दत्वमात्मनः सुवचम् ।

**मोक्षे नित्यसुखसम्भावना नास्ति**

अपि च मोक्षे नित्यसुखस्वभावे तद्रागेण प्रयतमानो मुमुक्षुर्न मोक्षमधिगच्छेत् । न हि रागिणां मोक्षोऽस्तीति मोक्षविदः । दुःखनिवृत्त्यात्मकेऽपि मोक्षे दुःखद्वेषात् प्रयतमानस्य समानो दोष इति चेत्, न, मुमुक्षोर्द्वेषाभावात् । रागद्वेषौ हि संसारकारणमिति च जानाति मुमुक्षुः, द्वेष्टि च दुःखमिति कथमिदं सङ्गच्छते ? सुखेऽप्यस्य रागो नास्त्येवेति चेत्, न, स्वर्गनिर्विशेषेऽपवर्गे स्वर्गवद्रागस्य सम्भाव्यमानत्वात् । दुःखेन तु निर्विण्णस्य मुमुक्षोर्वैराग्यं जायते न दुःखविषयो द्वेषः, विरक्तस्य चास्य मोक्षं प्रति यत्नो भवति न दुःखं द्विषत इति समानो न्यायः ।

यत्तूक्तम्—निरानन्दो मोक्षः प्रेक्षावतां प्रयत्नविषयो न भवतीति, तदपि न साम्प्रतम्, प्रयोजनानुसारेण प्रमाणव्यवस्थानुपपत्तेः । न हि प्रयोजनानुवर्ति प्रमाणं भवितुमर्हति । यदि निरानन्दो मोक्षः प्रेक्षावतां न रुचितः, कामं मा भूत्, न त्वप्रमाणकमानन्दं तत्र कल्पयितुं शक्नुमः । न च सर्वात्मना साधूनामनभिमत एव तथाविधो मोक्षः । न च तदवाप्तये न प्रयतन्ते । ते ह्येवं विवेचयन्ति दुःखसंस्पर्शे शाश्वतिकसुखसम्भोगासम्भवाद् दुःखस्य चावश्यहातव्यत्वात्, विवेकहानस्य चाशक्यत्वाद् विषमधुनी इवैकत्र पात्रे पतिते उभे अपि सुखदुःखे त्यज्येतामिति । अतश्च संसारान्मोक्षः श्रेयान् यत्रायमियानतिदुःखप्रबन्धोऽवलुप्यते, वरमियतो कादाचित्की सुखकणिका त्यक्ता न तस्याः कृते दुःखभार इयानूढ इति । तस्माद् न सुखोपभोगात्मको मोक्ष इति ।

**सुखासत्त्वखण्डनम्**

अन्यस्त्वाह, तिष्ठतु तावन्मोक्षः संसारेऽपि न सुखं नाम किञ्चिदस्तीति सर्व एवायं दुःखाभावमात्रे सुखव्यवहारः । तथा हि—

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि
क्षुधार्तः सञ्छालीन् कवलयति सम्पाकवलितान् ।
प्रदीप्ते रागाग्नौ घननिबिडमाश्लिष्यति वधूं
प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः ।। इति ।

उच्यते, तदिदमतीव कृतकवैराग्यप्रकटनकौरुकुचीकूर्चकौशलम्, आनन्दस्य प्रतिप्राणिसंवेद्यस्य निह्नोतुमशक्यत्वात् । अनिवृत्तेऽपि दुःखे क्वचित् सुखसंवेदनान्न दुःखाभावः सुखम्, निरभिलाषस्याप्यतर्कितोपनतसुखसाधन-विषयसम्पर्के सति सुखसंवेदनदर्शनात्, अभिलाषात्मकदुःखाभावः सुखमित्यपि न मनोज्ञम्, यस्तु दुःखाभावे क्वचित् सुखमित्यपि व्यपदेशः प्रशान्तरोगाणामिव पूर्वदर्शितः, स भाक्त इति न तावता स्वसंवेदनसाक्षिकसुखापह्नवः कर्तुमुचितः । मोक्षे तु नित्यसुखमसम्भवत् प्रमाणं नाभ्युपगम्यते ।

**मोक्षे आत्मनः स्वरूपेऽवस्थितिविचारः**

अपि च मोक्षे सुखमस्ति न वेति विचार एष न प्रामाणिकजनोचितः । स्वरूपेण व्यवस्थानमात्मनो मोक्ष इति मोक्षविदः । तत्रात्मस्वरूपमेव कीदृगिति चिन्त्यं न पृथङ् मोक्षस्वरूपम् । आत्मनश्च सुखदुःखबुद्ध्यादय आगन्तुका गुणा न महत्त्ववत् सांसिद्धिका इति निर्णीतमेतदात्मलक्षणे, सुखादिकार्येण चात्मनोऽनुमानादिति । अत एव कपिलकथितचितिशक्तिस्वभावत्वमपि न युक्तमात्मनः ।

सचेतनश्चिता योगात् तदभावादचेतनः ।
चितिर्नामार्थविज्ञानं कादाचित्कन्तु तस्य तत् ।।

---

**प्रतीकारो व्याधेरिति ।** व्याधेः ज्वरादिजनितस्य दुःखस्य निवर्तकं शाल्यादि । सुखं सुखजनकमिति विपर्यस्यति, दुःखनिवृत्तिजनकं हि तत् ।

**कौरुकुचीकूर्चकौशलमिति ।** कोरुकुचो दम्भः, लोकवञ्चनार्थकं दीर्घश्मश्रुधारणं कूर्चशब्देन सूचितम् । **अनिवृत्तेऽपि दुःख इति ।** यथासीद् ह्रदावनिनिमग्नकायस्य युगपदुभयानुभवः । **अभिलाषात्मकदुःखाभाव इति ।** यद्विषयोऽभिलाषो जायते, तस्याप्राप्त्या यावदभिलाषो न निवर्तते, तावद् दुःखित इव पुरुषो भवति ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

नार्थसंवेदनादन्यच्चैतन्यं नाम विद्यते ।
तच्च सामग्र्यधीनत्वात् कथं मोक्षे भविष्यति ।।
जाग्रतः स्वप्नवृत्तेर्वा सुषुप्तस्यापि वात्मनः ।
ज्ञानमुत्पद्यतेऽन्या तु चतुर्थी नास्ति तद्दशा ।।
जाग्रद्दशायां स्वप्ने च बुद्धेः प्रत्यात्मवेद्यता ।
सुखं सुप्तोऽहमद्येति पश्चात् प्रत्यवमर्शनात् ।।
तदा त्वचेत्यमानापि सुषुप्ते धीः प्रकल्प्यते ।
तुर्यावस्था तु संवित्तिशून्यस्य स्थितिरात्मनः ।।

---

ननु जाग्रत्स्वप्नयोर्भेदग्रहणात्मकाविद्यावशाद् आत्मस्वरूपस्य विज्ञानादेर्मा भूत् प्रकाशः; सुषुप्तावस्थायां वा अभेदाग्रहरूपा अविद्या समर्थ्यमाना, मास्तु तत्तत्त्वावगमः; चतुर्थी तुर्यावस्था यस्याम् उभयरूपाविद्याविलयः, तत्र यथावस्थितात्मतत्त्वावगतिर्भविष्यतीत्याशङ्क्याह, **जाग्रतः स्वप्नवृत्तेर्वा** इति। ननु यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्, तत्र कथं ज्ञानमुत्पद्यत इत्याह, **सुषुप्ते धीः प्रकल्प्यते** । कथं प्रकल्प्यत इति चेत् तदाह, **पश्चात् प्रत्यवमर्शनादिति** । पश्चाद्भाविनः प्रत्यवमर्शात्, स्मरणादित्यर्थः । ननु कथं चतुर्थी दशा नास्ति ? यावता तुर्यावस्थायाम् आत्मस्वरूपप्रतिपादिकां श्रुतिं पठन्ति "नान्तःप्रज्ञम्, न बहिःप्रज्ञम्, नोभयतः प्रज्ञम्, न प्रज्ञानघनम्, न प्रज्ञम्, नाप्रज्ञम्, अदृष्टम्, अव्यवहार्यम्, अग्राह्यम्, अलक्षणम्, प्रपञ्चोपशमम्, शिवम्, अद्वैतम्, चतुर्थीं मन्यन्ते स आत्मा, स विज्ञेयः।" इति। तदाह, **तुर्यावस्था त्विति**। संवित्तिशून्यस्यात्मनो या स्थितिः सा तुर्यावस्था, न युष्मत्परिकल्पितेत्यर्थः। आगमस्त्वन्यपर इति। अन्ये त्ववस्थाचतुष्टयमेवं वर्णयन्ति, इन्द्रियमनोऽर्थसन्निकर्षेण व्यवहारो जाग्रत्। इन्द्रियदौर्बल्येन ग्राह्यार्थं प्रति मनसः स्मृतिमात्रशेषा बहिरप्रसृतेन्द्रियत्वेन च स्वप्नावस्था। ज्ञातुर्ज्ञेयग्रहणासामर्थ्यं मौढ्येनावस्थानं सुषुप्तम्। अविलुप्तवेदनावृत्तित्वात् तिसृणामवस्थानां वेदनं तुर्यमिति। आगमं च पठन्ति,

योऽयमर्थग्रहो द्रष्टुरक्षद्वारश्चिदात्मनः ।
शब्दादिविषयाकारस्तज्जाग्रदिति कथ्यते ।। १ ।
तस्यैवार्पितसंस्कारवृत्तेर्मानसदर्पणे ।
स्मृतिर्भवति या भूयस्तामाहुः स्वप्नरूपकम् ।। २ ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

तुर्यावस्थातिगं रूपं यदाहुः केचिदात्मनः ।
प्रमाणागोचरत्वेन कल्पनामात्रमेव तत् ॥
संवित्प्रसवसामर्थ्यं सामग्रीसन्निधानतः ।
यदि नामात्मनोऽस्त्यस्य तावता न चिदात्मता ॥

यदि तु दर्शनशक्तियोग्यतामात्रमेव पुंसश्चैतन्यमुच्यते तर्हि, तथाविधस्य तस्य कैवल्यस्यास्माकीनमोक्षसदृक्षत्वमेव योग्यतामात्रसम्भवेऽपि दृश्येन्द्रिय-संयोगादेः सामग्र्या वैकल्यावस्थायामात्मनो द्रष्टृत्वासम्भवाद् दर्शनशून्यस्य चान्यस्य चैतन्यस्य निरस्तत्वादिति ।

निर्वाणादिपदाख्येयमपवर्गन्तु सौगताः ।
सन्तत्युच्छेदमिच्छन्ति स्वच्छां वा ज्ञानसन्ततिम् ॥

एतद् द्वितयमप्युक्तं पूर्वमेव, तद् ध्वस्तञ्च, ज्ञानसन्ततिर्नित्यश्चात्मा समर्थितः ।

सन्तत्युच्छेदपक्षस्तु नैयायिकमतादपि ।
शोच्यो यत्राश्मकल्पोऽपि न कश्चिदवशिष्यते ॥

---

यत्रार्थस्मरणे नष्टे ह्यद्रष्टृदृग्व्यवस्थितिः ।
अभावभावे संज्ञेयः सुषुप्त इति योगिभिः ॥ ३ ।

अलुप्तवेदानावृत्तेरवस्थात्रयभाविनः ।
रूपस्य वेदिकामाहुस्तुर्यावस्थां मनीषिणः ॥ ४ ।

अवस्थाचतुष्टयोत्तीर्णन्तु यदात्मनश्चिद्रूपतया स्वभावेनावस्थानं सा तुर्यातीता स्थिति-रिति । आह च—

त्रिप्रकारं यदा वेद्यं न वेत्ति स्वव्यवस्थितः ।
वेदकत्वं तदानश्यत् तुर्यातोतस्थितिस्तु सा ॥ इति ।

**तं तुर्यावस्थातिगं रूपमित्यादिना** निराकरोति ।

**स्वच्छां वा ज्ञानसन्ततिमिति ।** समुच्छिन्नसकलवासनात्वाद् विषयाकारोपप्लव-रहिताम् ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अर्हत्पक्षेऽपि यद्रूपमन्यसापेक्षमात्मनः ।
न केवलस्य तद्रूपमित्यस्मन्मततुल्यता ॥
विकारित्वन्तु जीवानामत्यन्तमसमञ्जसम् ।
शब्दपुद्गलवच्चैतत् प्रत्याख्येयमसम्भवात् ॥

---

**न केवलस्य तद्रूपमिति ।** तज्ज्ञानादिलक्षणं रूपम्, कैवल्यावस्थायामपि तस्य रूपस्याभ्युपगमे ऐकान्तिकत्वात् तस्य रूपस्यानैकान्तिकरूपत्वहानिप्रसङ्गात् । **विकारित्वं तु जीवानामित्यादिना** जैनमतं निराकरोति । इदं तेषां मतं भवति बोद्धा पुरुषः, स च कायमात्रः सङ्कोच विकासधर्मा मणिप्रभावादिति । तदनेन निराकरोति एतदभ्युपगमे हि पुरुषस्यानित्यत्वं प्राप्नोति, कायपरिमाणत्वेनावयवित्वापत्तेः । निरवयवे एवंरूपपरिमाणासम्भवाद् अमूर्तस्य च व्योमादेर्विभुत्वदर्शनात्, परिमाणवतः क्रियावतश्चावश्यमनित्यत्वात्, सत्यपि बोद्धृत्वे तस्य सर्वार्थग्रहणायोगादित्यादिदूषणाघ्रातत्वादसम्भवित्वमस्य दर्शनस्य । यथा शब्दपुद्गलाः सूक्ष्माः स्थूलशब्दात्मना विक्रियन्ते विपरिणमन्ते तथा जीवपुद्गलाः सूक्ष्मा जीवात्मना विक्रियन्ते विपरिणमन्त इति यद् मतं तदेव तु ग्रन्थकृता दूष्यत्वेनास्मिन् श्लोके विवक्षितमिति लक्ष्यते । दृष्टान्त-दार्ष्टान्तिकयोर्ह्येवं स्फुटतरोऽर्थोऽवगम्यत इति । यथा वा अकलङ्कादयः स्थितास्तथाप्यसम्भवित्वमेव । ते ह्याहुः "ज्ञानसन्तानपक्षस्तावदनुपपन्नः, सर्वबुद्धिष्वेकस्य चेतनस्यानुवर्तमानस्योपलम्भात् । तत्र किं तस्य ज्ञातृत्वं ज्ञानसमवायाद् उत स्वतः ? तत्र न तावद् ज्ञानसमवायात् । समवायस्यैकत्वाद् व्यापकत्वाच्च यावत् तस्यासौ समवायो व्यतिरिक्तेन ज्ञानेन ज्ञातृत्वमापादयति तावच्चेतनस्य घटादेरपि किमिति नापादयति । अथ समवायस्य स्वतः शक्तिविशेषः तादृगस्ति येनात्मना एव ज्ञातृत्वमापादयति नान्येषामिति, तर्ह्यात्मन एव तादृशः शक्तिविशेषो ज्ञातृत्वाख्यः कल्प्यताम्, किं समवायस्य तत्कल्पितेन । एवं तावद् ज्ञातृतास्वभाव आत्मा तस्य ये पर्यायभाविनो मिथ्याज्ञातृत्वादयः स्वभावविशेषास्ते किं तद्धर्मसम्बन्धाद् आहोस्वित् तेन रूपेण विकारित्वात् ? न तावद् धर्मसम्बन्धाद् धर्मे ह्यस्योपकारः कार्यः, तेन च धर्मिणाम्, उपकारप्रभावितत्वात् सम्बन्धस्य । न चाप्रवर्तमान उपकार्यं उपकारको वा भवति । प्रवर्तते चेत् पूर्वमप्रवृत्तस्य प्रवर्तनाद् विकारित्वम् । एवमस्य स्वतश्चित्स्वभावस्य जीवस्य कर्मसम्बन्धवशाद् मिथ्यादर्शनादेर्विकारस्योदयो दृष्टः । वस्त्वन्तरसम्बन्धवशात् त्वस्य विकारयोगो यथा मदिराविषादिसम्बन्धाद् मूर्छितत्व-मृतत्वादिविकार-



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

तस्मान्न वेदान्तविदो विदन्ति मोक्षं न सांख्या न च सौगताद्याः ।
इत्यक्षपादाभिहितोऽपवर्गः श्रेयांस्तदत्यन्तविमोक्ष एव ॥

---

प्रादुर्भावः । तदेवं वस्त्वन्तरं कर्मैवास्य नानाविधविकारहेतुत्वाज्जीवस्य संसारकारणम्, तत्परिक्षयात् मोक्षः" इति । यथाह अकलङ्कदेवः,

जीवस्य संविदो भ्रान्तेर्निमित्तं मदिरादिवत् ।
तत्कर्मागन्तुकं तस्य प्रबन्धोऽनादिरिष्यते ॥ इति ।

अस्यार्थः । सम्यग् वेत्तीति संवित् । तस्य संविदः स्वतो ज्ञानस्वभावस्य जीवस्य भ्रान्तेर्मिथ्याज्ञानस्य कर्म निमित्तं नेश्वरादिकं मदिरादिवदिति व्याख्यातम् । यदि कर्म तन्निमित्तं तर्हि सर्वदा कर्मसद्भावाद् मोक्षाभाव इत्याह तदागन्तुकमिति । आगन्तुकत्वेनानित्यत्वेन तत्क्षयात् कदाचिद् मोक्षसम्भव इत्यर्थः । यद्यागन्तुकं तत् कदाचिन्न भवेदपि । तदा संसारावस्थायामपि मध्ये कर्मवियोगादात्मनो मुक्ताः स्युस्तदर्थमाह, तस्य प्रबन्धोऽनादिरिष्यते । अविच्छेदेन कर्माण्यनादिप्रवाहेण स्थितानीत्यर्थः । तथा

आत्मलाभं विदुर्मोक्षं जीवस्यान्तर्मलक्षयात् ।
नाभावो नाप्यचैतन्यं [न चैतन्यम्] अनर्थकम् ॥ इति ।

आत्मलाभं जीवस्य विकारापगमे सति मोक्षमाहुः । कुतः ? अन्तर्मलक्षयाद्धेतोः । स त्वात्मलाभलक्षणो मोक्षो नाभावः सन्तत्युच्छेदलक्षणो यथाहुर्बौद्धाः । नाप्यचैतन्यं बुद्धिशून्यस्यावस्थानं यथाहुर्वैशेषिकादयः । नाप्यनर्थकं दृश्यार्थशून्यचिन्मात्रं यथाहुः साङ्ख्याः । किन्तु अनन्तज्ञानादिगुणयुक्तस्यावस्थानमित्यर्थः । तथा अपरमाहुः,

शब्दः पुद्गलगपर्यायः स्कन्धश्छायातपादिवत् ।
बुद्धिकार्यविशेषात्माभिलापः स्वार्थगोचरे ॥ इति ।

पुद्गलानां परमाणूनां पर्यायः क्रमभावो विकार परिणामविशेषः शब्दः । स च स्कन्ध, अनन्तानन्तपरमाणुवत्त्वसंसिद्धेः । न तु दृष्टः क्वचित् स्कन्धरूपपर्यायः परमाणूनाम् । तदाह, छायातपादिवदिति । यथा छायारूप आतपादिरूपश्च पुद्गलपर्यायः स्कन्धः तद्वच्छब्द इत्यर्थः । बुद्धिरेव श्रावणं ज्ञानमेव कार्यविशेषात्मा कार्यविशेषरूपं यस्य स बुद्धिकार्यविशेषात्मा । एवमपि समुद्रघोषादिरपि वाचकः प्राप्त इत्याह, स्वार्थगोचर इति । यो बुद्धिकार्यविशेषात्मा स्वार्थविषये बुद्ध्या लक्ष्यमाणः स्वार्थे यो व्याप्रियते स बुद्धिकार्यविशेषात्मा अभिलापः । अभिलाप्यतेऽनेनेत्यभिलापः वाचको न सर्व इत्यर्थः । तथापरमाह,

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

**अपवर्गोत्पत्तौ क्रमः**

आह भवत्वयमीदृगपवर्गः, स तु कथमधिगम्यते इत्युच्यताम् । उक्तमेव भगवता सूत्रकारेण,

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादिति ।**

दुःखोच्छेदस्तावदपवर्ग इति कथितम्, कार्यत्वाच्च दुःखस्य कारणच्छेदात्तदुच्छेदः, कारणं चास्य जन्म, जन्मनि हि सति दुःखं भवति, जायते इति जन्म देहेन्द्रियादिसम्बन्ध आत्मनः, तदपि जन्मकारणोच्छेदादेवोच्छेद्यम्, अतस्तत्कारणं प्रवृत्तिरुच्छेद्या, तस्या अपि उच्छेदो हेतूच्छेदादिति तद्धेतवो दोषा उच्छेद्याः । तेषान्तु निमित्तं मिथ्याज्ञानं तस्मिन्नुच्छिन्ने दोषा उच्छिन्ना

---

संसर्गात् परमाणवः परिणताः शब्दाः श्रुतेर्गोचराः ।
तद्भेदः प्रतिलब्धवर्णपदवाक्यात्माभिलापः स्वतः ॥
सिद्धार्थो यमुपेत्य वक्ति किमयं प्राहेत्यसङ्केतितः ।
स्वार्थेऽक्षादिव भेदकाङ्क्षणमनाः सामान्यवेदी जनः ॥

परमाणवः परस्परसंसर्गात् परिणताः स्कन्धतामापन्नाः शब्दाः श्रुतेः श्रवणस्य श्रवणस्थानस्य वा गोचरा विषयभूताः । एवं सर्वे काकवाशितादयोऽपि वाचकाः प्राप्ताः, तदर्थमाह, तद्भेदस्तद्विशेषोऽभिलापो वाचको न सर्वं इत्यर्थः । कोऽसौ तद्भेदः ? इत्याह प्रतिलब्धवर्णपदवाक्यात्मेति । अन्यश्च कीदृक् ? स्वतः सङ्केतनिरपेक्षः सिद्धोऽर्थो यस्य स स्वतः सिद्धार्थसम्बद्ध इत्यर्थः । कथं स्वतः सिद्धार्थोऽभिलापः ? इत्याह यमुपेत्येति । यमुपेत्य प्रतिपद्य श्रुत्या । किं वस्तु अयं शब्दः प्राहेति वक्ति जनः । किंभूतः ? असङ्केतितः सङ्केतरहितः । अतः कारणादसावभिलापः स्वतः सिद्धार्थः । किंभूतः पुनरेवं वक्तीत्याह स्वार्थे सामान्यवेदी । स्वार्थे सामान्यविशेषात्मके सामान्यमात्रं प्रतिपद्य विशेषाकाङ्क्षणमनाः, विशेषकाङ्क्षणं विशेषार्थि मनो यस्य । दृष्टान्तमाह अक्षादिव । यथाक्षात् सामान्यविशेषात्मके पानकादौ द्रव्ये ग्राह्ये सामान्यमात्रं गृहीत्वा विशेषाकाङ्क्षी भवति, किमिदमास्वाद्यत इति । तद्वदिति । प्रसङ्गात् श्लोका अपि व्याख्याताः । तदेतदुभयमपि अनुपपन्नम्, प्रमाणाभावादिति दृष्टान्तदार्ष्टान्तिकत्वेनोपन्यस्य निराकृतम्, शब्दपुद्गलपक्षस्य च पूर्वं निराकृतत्वाद् दृष्टान्तत्वेनोपादानम् ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

भवन्तीति मिथ्याज्ञानमुच्छेत्तव्यम्, तदुच्छित्तये च तत्त्वज्ञानमुपायः, प्रसिद्धो ह्ययमर्थः समर्थितश्च पूर्वं विस्तरतः 'तत्त्वज्ञानं मिथ्याज्ञानस्य बाधकम्' इति, तस्मान्मिथ्याज्ञानदोषप्रवृत्तिजन्मदुःखनिवृत्तिक्रमेणापवर्ग इति ।

यद्यपि च मिथ्याज्ञानमपि जन्मकार्यमशरीरस्यात्मनो मिथ्याज्ञानानुत्पत्तेः, इतरेतरकार्यकारणभावेन बीजाङ्कुरवदनादिप्रबन्धप्रवृत्तेन प्रवर्तमाना मिथ्याज्ञानादयो भावाः संसार इत्युच्यते, तथापि तत्कारणोच्छेदचिन्तायां कुतः प्रभृतिच्छेद उपक्रम्यतामिति विचार्यमाणे विशेषनियमाभावाद्यतः कुतश्चिदिति प्राप्ते मिथ्याज्ञानस्य प्रतिकूलमुच्छेदकारणं तत्त्वज्ञानमुपलब्धमिति विशेषे प्रमाणभावात् तदुच्छेद एवोपक्रम्यते । अत एव मिथ्याज्ञानमूलः संसार उच्यते, तस्मिन्नुच्छिन्ने तदुच्छेदसम्भवान्न ततः प्रभृति संसारप्रवृत्तिरिति निपुणमतिभिरपि निर्धारयितुं शक्यमनादित्वात् तस्येति, तदेवं तत्त्वज्ञानान्मिथ्याज्ञानापाये तत्कार्यदोषापायो दोषापाये प्रवृत्त्यपायः प्रवृत्त्यपाये जन्मापायः जन्मापाये दुःखापायः स एवापवर्ग इति । तदिदमुक्तम् 'उत्तरोत्तरापाये तदनन्तराभावादिति' ।

**मोक्षस्य कथामात्रसारता तदुपायानाञ्चानुष्ठानायोग्यत्वम्**

आह, विदितोऽयं सूत्रार्थः, किन्त्वघटमानमनोरथविडम्बनामात्रमिदम्, अलीकश्रद्दधानताप्रकटनं वा, दुरधिगमस्तु सङ्कटो मोक्षमार्गः ।

साध्यस्त्रिवर्ग एवैष धर्मकामार्थलक्षणः ।
चतुर्थः पुरुषार्थस्तु कथास्वेव विराजते ।।
यदा प्रियवियोगादि भवत्युद्वेगकारणम् ।
तदा मोक्षकथाः कामं क्रियन्तां शोकशान्तये ।।

न तूद्यमसमये तदधिगमसमर्थामुपलभामहे सरणिम्, ऋणक्लेशप्रवृत्त्यनुबन्धस्य दुस्तरत्वात्, ऋणानुबन्धस्तावत् 'जायमानो ह वै ब्राह्मणस्त्रिभिरृणैरृणवान् जायते, ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इति । इदं हि वेदे पठ्यते, तत्र प्रथममृषीणामनृणः स्यामिति ब्रह्मचर्यमाचरति, ततः पितॄणामनृणः स्यामिति कृतदारसङ्ग्रहः प्रजोत्पादनाय व्यवहरति, तदनु

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

गृहस्थ एव दर्शपूर्णमासादिषु सहस्रसंवत्सरपर्यन्तेषु कर्मस्वधिकृतः क्रतूननुतिष्ठतीति देवानामनृणः स्यामिति, कोऽस्य मोक्षव्यवसायावसरः ?

ननु च 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्' इति मन्वादिस्मरणादस्त्येव तदवसरः ? न, श्रुतिवाक्यविरोधात् । एवं हि श्रूयते 'जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपौर्णमासौ च, जरया ह वा एष एतस्मान्मुच्यते मृत्युना वेति' न च कर्मप्रयोगाशक्त्या कर्मभ्यो विरन्तुं लभ्यते, स्वयमशक्तस्य बाह्यशक्त्युपदेशात्, 'अन्तेवासी जुहुयाद् ब्रह्मणा हि स परिक्रीतः क्षीरहोता जुहुयाद् घृतेन हि स परिक्रीतः' अशक्तस्य च मोक्षोपायानुष्ठानेऽप्यस्य कथं शक्तिः । क्लेशानुबन्धादपि अपवर्गाभावः ।

ये हि रागादयो दोषा आत्मनश्चिरसम्भृताः ।
कस्तान् वञ्चयितुं शक्तः पुनरावृत्तिधर्मकान् ॥
कामं चिरं विजित्यापि क्रोधं वा लोभमेव वा ।
पुनर्गच्छन् वशं तेषां लोकः प्रायेण दृश्यते ॥

तथा हि, चिरमपि तपसि नियमितमतिरवजितविषमशरविकृतिरपि तनुपवनापनीतवसनकामिनीस्तनजघनदर्शनादेव वशं विश्वामित्रः कुसुमधन्वनो गत इति श्रूयते किल ह्याख्यायिकया । अद्यत्वेऽप्येवं शतशो दृश्यन्त इति दुरुच्छेद्या दोषाः । 'वीतरागजन्मादर्शनात्, इति च विचारितमात्मपरीक्षायामवियुक्त एव दोषैर्जन्तुर्जायत इति, दोषविवृद्धिहेतवश्च रूपादयो विषयास्ते कथमिव स्वकर्मण्युदासते ?

ताम्बूलं कुसुमसुगन्धयः समीराः सौधेषु प्रतिफलिताः शशाङ्कभासः ।
वाचश्च प्रणयनवामृतद्रवार्द्रा दूतीनां दधति न कस्य रागवृद्धिम् ॥

अपि च,

मुग्धस्मितसुधाधौतमधुरालापशालिना ।
मुखेन पद्मलाक्षीणां कस्य नाक्षिप्यते मनः ॥

---

**जरामर्यम्**, जरामरणपर्यन्तम् । **ब्रह्मणा हि स परिक्रीत** इति । ब्रह्मणा वेदलक्षणेन मूल्येन आपणे स्वीकृतः । **क्षीरहोता** अध्वर्युः ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

इत्येवं निदानानुपशमादपि स्थित एव क्लेशानुबन्धः । प्रवृत्त्यनुबन्धः खल्वपि,

रागादिप्रेर्यमाणो हि कर्माण्यारभते नरः ।
दीर्घदीर्घाः प्रतायन्ते यैर्धर्माधर्मवासनाः ॥
स प्रवृत्त्यनुबन्धश्च हेतुरन्यस्य जन्मनः ।
एकमेवेदृशं कर्म कर्तुमापतति क्वचित् ॥
जन्मायुतशतेनापि यत्फलं भुज्यते न वा ॥
क्लेशकर्मानुबन्धोत्थजन्मदुःखादिशृङ्खला ।
पुनरावर्तमानैषा केनोपायेन भज्यताम् ॥
विना फलोपभोगेन न हि नाशोऽस्ति कर्मणाम् ।
तेषां ज्ञानाग्निना दाह इति श्रद्धाविजृम्भितम् ॥
कार्यकारणभावो हि शास्त्रादेवावधारितः ।
कर्मणाञ्च फलानाञ्च स कथं वा निवर्तताम् ॥
न चास्य ज्ञानसापेक्षं कर्मेष्टं बन्धकारणम् ।
येनात्मज्ञानयुक्तानां तदुदासीत तं प्रति ॥

अज्ञाननैरपेक्ष्येण कर्मणां स्वभाव एवैष यत् फलाविनाभावित्वमिति ।

तस्मादित्थमृणक्लेशप्रवृत्त्यभ्यनुबन्धतः ।
न मोक्षसिद्धिरस्तीति तदर्थो विफलः श्रमः ॥
अशक्येऽर्थे वृथायासं परित्यज्य मनस्विभिः ।
मोक्षचर्चाः परित्यज्य स्वे गृहे सुखमास्यताम् ॥

**मोक्षोपायानामनुष्ठानयोग्यत्वम्**

अत्राभिधीयते, यत् तावदुक्तमृणानुबन्धादिति, तदयुक्तम्, विधिपक्षश्रवणादौपचारिकमृणशब्दं जायमानशब्दं च प्रयुज्य कर्मस्तुतिरियं क्रियते 'जायमानो

---

**निदानानुपशमादिति ।** क्लेशानां रागादीनां निदानानि कारणानि ।

**विधिपक्षश्रवणादिति ।** तद्विषये हि विधौ प्राधान्याद् औपचारिकत्वासम्भवः । घोषः प्रतिवसतीति यथा न प्रतिवसनं प्रधानम् अत उपचर्यते ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

ह वै ब्राह्मण इति'। न तद्व्यतिरिक्तपुरुषार्थविषयप्रयत्नप्रतिषेधो विधीयते। तथा हि ऋणशब्दोऽयं विषयान्तरे मुख्यार्थः प्रसिद्धो यत्रोत्तमर्णः सलाभममुतः प्रतिग्रहीष्यामीति धनमधमर्णाय प्रयच्छति, अधमर्णोऽपि सलाभमस्मै प्रदास्यामीति मत्वा गृह्णाति, सोऽयमृणशब्दस्य मुख्यो विषय इह नास्त्येव, जायमानोऽपि मुख्य उत्पद्यमानोऽपि मातुः कुक्षिकुहरान्निस्सरन्नभिधीयते, न चासौ बालकः कर्मभिरभिसम्बध्यते, तस्माद् ब्रह्मचर्यमपत्योत्पादनमध्वरप्रयोग इति त्रयमिदमवश्यकर्तव्यमिति कर्मस्तुतिरियम् औपचारिकपदप्रयोगाद् गम्यते, न चैतावता मोक्षव्यवसायात्रसरविरह इति परिशङ्कनीयम्, आश्रमान्तरस्य तदौपयिकस्य दर्शनात्।

## चतुर्थाश्रमसमर्थनम्

ननु मरणावधिदर्शपूर्णमासकर्मोपदेशात् कथमाश्रमान्तरग्रहणम् ? न जरामर्यवादस्याप्यपरित्यागप्रतिपादनाय कर्मप्रशंसार्थत्वात्, 'ये चत्वारः पथयो देवयानाः' इत्यादयो हि चतुर्थाश्रमशंसिनो भूयांसः सन्ति मन्त्रार्थवादाः, मन्वादिस्मृतिवचनानि चतुर्थाश्रमोपदेशीनि चतुर्थाश्रमोचितश्रौताचारादीतिकर्तव्यतावितानविधानपराणि च प्रबन्धेनैव दृश्यन्ते।

एवं गृहाश्रमे स्थित्वा विधिवत् स्नातको द्विजः।
वने वसेत्तु नियतो भैक्षभुग् विजितेन्द्रियः॥

इत्युपक्रम्य चतुर्थाश्रमोचितमोक्षोपायानुष्ठानोपदेशाय षष्ठोऽध्यायः समस्त एव मनुनानुक्रान्तः, जाबालश्रुतौ च विधायकेनैव ब्राह्मणवाक्येन प्रतिपदमाश्रमचतुष्टयमुपदिष्टम्, 'ब्रह्मचारी भूत्वा गृही भवेद् गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेत्' इति, अग्निसमारोपणविधानोपदेशश्च प्रत्यक्षश्रुतः कथमपह्नूयेत 'आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्' इति, अपि च उपनिषदामध्ययनमसति मोक्षोपयोगसमर्थे चतुर्थाश्रमे निरर्थकमेव प्राप्नोति,

---

**ये चत्वारः पथय** इति। आदिपदेन 'ये चैते अरण्ये श्रद्धा-तप इत्युपासते' इत्येवमादीनां परिग्रहः। पन्थानः देवयाना देवत्वप्राप्तिहेतवः।

**अग्निसमारोपणविधिश्चेति** समारोपणं विलोड्य भस्मनः पानम्।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

क्रियाकाण्डानुष्ठाननिष्ठत्वे हि वेदस्य ज्ञानकाण्डोपदेशः किम्प्रयोजनः स्यात् । तदेवं वर्णवदाश्रमाणामपि चतुर्णां प्रत्यक्षोपदेशसिद्धत्वाच्चतुर्थाश्रमिणाञ्च मोक्षाधिगमोपायतत्त्वज्ञानभावनाभ्यासावसरसम्भवात् सोऽयं जरामर्यवादः प्रशंसामात्रपर एवावतिष्ठते, 'जरया ह वा एष एतस्मान्मुच्यते मृत्युना वा' इति च वचनाज्जरसा कर्मत्यागानुज्ञानात् स एव चतुर्थाश्रमावसर इति गम्यते । तदुक्तम्,

गृहस्थस्तु यदा पश्येद् बली पलितमात्मनः ।
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ।।

इतरथा हि मृत्युनैव च तस्मान्मुच्यते इत्यवक्ष्यत न त्वेवमब्रवीत्, तस्माद्वार्धकदशोचितं चतुर्थमाश्रममनुमन्यते ।

## गृहस्थोऽपि मोक्षाधिकारी

तिष्ठतु वा वार्धकदशा यतोऽपि परिपक्वकषायस्याश्रमचतुष्टयक्रममनपेक्ष्यैव मोक्षाधिकार आख्यातः । यथोक्तं 'ब्रह्मचर्यादेव प्रव्रजेत्' इति । अत एव द्विविधो ब्रह्मचारी भवत्युपकुर्वाणो नैष्ठिकश्च, तत्रोपकुर्वाणको यो ब्रह्मचर्यमनुभूय गृहस्थाश्रममनुभवति स चापरिपक्वकषायोऽनुपशान्तगार्हस्थ्यरागस्तमेव प्रतीदमुच्यते ।

अनधीत्य द्विजो वेदाननुत्पाद्य च सन्ततिम् ।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ।। इति ।

यस्तु परिपक्वकषायः स नैष्ठिक एव ब्रह्मचारी भवति न गृहस्थाश्रमं प्रतिपद्यते । गृहस्थोऽपि परिपक्वकषायो वानप्रस्थाश्रममुल्लङ्घ्य यतित्वेऽधिक्रियते । यथोक्तम् 'गृहाद् वनाद् वा प्रव्रजेत्' इति ।

केचित्तु कर्मफलाभिसन्धिरहितस्य कर्तव्यमिति कर्म कुर्वतः क्षीणरागस्यात्मविदो गृहस्थस्यापि मोक्षः । योऽतिथिप्रियः श्राद्धकृद् वेदविद्याविद् गृहस्थोऽपि विमुच्यते इति, तस्मादृणानुबन्धादपवर्गाभाव इत्ययुक्तम् ।

---

अपरिपक्वकषाय इति । अस्यैवानुपशान्तराग इति पर्यायकथनम् ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

यत्तु क्लेशानुबन्धादिति तदप्यनध्यवसायमात्रम्, प्रतिपक्षभावनादिना क्लेशोपशमस्य सुशकत्वात् । यद्येषां नित्यो हेतुर्भवेत् कार्यो वा, यद्यसौ न ज्ञायेत, ज्ञातोऽपि वानुष्ठातुमसौ न शक्येत तदा क एवैनमुच्छिन्द्यात् । किन्तु,

नाकस्मिका न नित्यास्ते न नित्याज्ञातहेतुकाः ।
नाज्ञातशमनोपाया न चाशक्यप्रतिक्रियाः ।।

न हि दोषाणामात्मस्वरूपवन्नित्यत्वमुपजननापायधर्मकत्वेन ग्रहणात्, मिथ्याज्ञानञ्च प्रसवकारणमेषामवधृतमिति नाकस्मिकत्वम्, अविनाशिहेतुकत्वम्, अज्ञातहेतुकत्वं वा । मिथ्याज्ञानस्य च सम्यग्ज्ञानं प्रतिपक्षः, प्रतिपक्षभावनाभ्यासेन च समूलमुन्मूलयितुं शक्यन्ते दोषा इति नाज्ञातप्रतीकारत्वं तेषाम् । उक्तञ्च केनचित्,

सर्वेषां सविपक्षत्वान्निर्ह्रासातिशयाश्रिताः ।
सात्मीभावात् तदभ्यासाद्धीयेरन्नामुना क्वचित् ।। इति ।

**रागशमनार्थं विषयेषु दोषदर्शनम्**

विषयदोषदर्शनेन हि तेषु सक्तिलक्षणो रागः शाम्यति यदा ह्येवं चिन्तयति विवेकी ।

असौ तरलताराक्षी पीनोत्तुङ्गघनस्तनी ।
विलुठ्यमाना कान्तारे विहगैरद्य भक्ष्यते ।।

---

**सर्वेषां सविपक्षत्वादिति ।** येन बाधकेन नैरात्म्यदर्शनेन विपक्षाः सर्वे आस्रवा रागादयः । तस्य बाधकस्याभ्यासाद् नैरन्तर्येणोत्पादात् सात्मीभावस्तन्मयत्वम्, तस्माद् बाधकसात्मीभावात् । क्वचित् सन्ताने हि परं ते निर्ह्रासातिशयाश्रिता अपकर्षोत्कर्षस्वभावाः, तथा चापकर्षोत्कर्षस्वभावत्वेन विपक्षाभिभवस्याप्यपकर्षोत्कर्षसिद्धिः । निर्ह्रासधर्मत्वे तेषां विपक्षकृतस्याभिभवस्योत्कर्षः । अतिशयधर्मत्वे त्वनुच्छेदाद् विपक्षकृतस्यापकर्षस्तदुच्छेदासमर्थत्वात् । आस्रवन्ति भवाग्राद् अवीच्यग्रं पातादित्यास्रवा रागादिदोषाः, आसयन्ति वा आसंसारमित्यास्रवाः । तदुक्तम्,

आसयन्त्यास्रवन्त्येते हरन्ति श्लेषयन्त्यथ ।
उपगृह्णन्ति चेत्येवमास्रवादिनिरुक्तयः ।।



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

विभाति बहिरेवास्याः पद्मगन्धनिभं वपुः ।
अन्तर्मज्जास्थिविण्मूत्रमेदःक्रिमिकुलाकुलम् ॥
अस्थीनि पित्तमुच्चाराः क्लिन्नान्यन्त्राणि शोणितम् ।
इति चर्मपिनद्धं सत् कामिनीति विधीयते ॥
मेदोग्रन्थी स्तनौ नाम तौ स्वर्णकलशौ कथम् ।
विष्ठादृतौ नितम्बौ च कोऽयं हेमशिलाभ्रमः ॥
मूत्रासृग्द्वारमशुचि च्छिद्रं क्लेदि जुगुप्सितम् ।
तदेव हि रतिस्थानमहो पुंसां विडम्बना ॥
प्रीतिर्यथा निजास्योत्थं लिहतः शोणितं शुनः ।
शुष्केऽस्थनि तथा पुंसः स्वधातुस्पन्दिनः स्त्रियाम् ॥
व्यात्तानना विवृत्ताक्षी विवर्णा श्वासघुर्घुरा ।
कथमद्य न रागाय म्रियमाणा तपस्विनी ॥
अहो व्रणे वराकोऽयमकाले तृषितः फणी ।
प्रसारितमुखोऽप्यास्ते शोणितं पातुमागतः ॥
किमनेनापराद्धं नः स्वभावो वस्तुनः स्वयम् ।
स्पृश्यमानो दहत्यग्निरिति कोऽस्मै प्रकुप्यति ॥
नानुकूलः प्रिये हेतुः प्रतिकूलो न विप्रिये ।
स्वकर्मफलमश्नामि कः सुहृत् कश्च मे रिपुः ॥

एवमहर्दिवं चिन्तयतां नितान्तं मनःसमचित्तता सर्वत्र समुद्भवतीति विलीयन्ते दोषग्रन्थयः ।

अत एवोपदिश्यन्ते मोक्षशास्त्रेष्वनेकशः ।
तस्य तस्योपघाताय तास्ताः प्रत्यूहभावनाः ॥

ननु च प्रतिपक्षभावनेऽपि न सर्वात्मना दोषपक्षः क्षयमुपयाति निम्बाद्युपयोगे इव क्रियमाणे कफधातुरिति, नैतदेवम्, तत्र निम्बोपयोगवत् तदनुकूलस्यातपादेरुपयोगदर्शनात् । अपि च,

धर्मिलोपभयात् तत्र नेष्टः सर्वात्मना क्षयः ।
कफाधिक्यन्तु हन्तव्यं धातुसाम्यस्य सिद्धये ॥

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

इह सर्वात्मनोच्छेद्याः क्लेशाः संसारकारिणः ।
छेदश्चैकान्ततस्तेषां प्रतिपक्षोपसेवनात् ।।

न च प्रतिपक्षभावनाभ्यासमेकमस्त्रमपास्य तदुपशमे निमित्तान्तरं किमपि क्रमते, न हि विषयाभिलाषस्तदुपभोगेन विरंस्यति । यथाह,

न जातुः कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।।

अन्यत्राप्युक्तम्, मोक्षाभ्यासमनुविवर्धन्ते कौशलानि चेन्द्रियाणाम् इति । पाराशर्योऽपि,

तृष्णाखनिरगाधेयं दुष्पूरा केन पूर्यते ।
या महद्भिरपि क्षिप्तैः पूरणैरेव खन्यते ।। इति ।

तस्मात् प्रतिपक्षभावनैव भगवती भीमकान्तिरन्तःकरणकान्तारे निरन्तरमभिज्वलन्ती दावदहनदीधितिरिव दहति दोषविटपकानिति । तदेवं दोषानुबन्धविध्वंसोपायसम्भवान्न तत्कृतो मोक्षमार्गरोधोऽभिधातव्यः, अत एव केचन चेतनस्य प्रकृत्या निर्मलत्वान्मलानामागन्तुकत्वान्मलनिबर्हण-हेतोश्च यथोक्तस्य सम्भवात् तदावरणापाये सति स्वतः सकलपदार्थदर्शन-सामर्थ्यस्वभावचित् तत्त्वावस्थानात् सर्वज्ञत्वसिद्धिमदूरवर्तिनीमेव मन्यन्ते ।

**क्लेशशून्यत्वमात्मनोऽनपवर्गेऽपि सिद्ध्यति**

यदप्युच्यते, 'क्लेशशून्यत्वमात्मनो न कदाचिदपि दृष्टमनुबन्धवृत्तित्वात्

---

**न जातु कामः कामानामिति**[४] । काम्यन्त इति कामा विषयास्तेषाम् ।

**भोगाभ्यासमनु** भोगाभ्यासानन्तरमेव पुनस्तदुपभोगविषया रागा अभिलाषाः ।

**कौशलानि चेन्द्रियाणां** यद्बलादनिच्छयापि तेषु विषयेषु प्रवर्तन्ते ।

**अत एव केचनेत्यादि** अर्हद्दृष्ट्याह । **यथोक्तस्य** तत्त्वज्ञानलक्षणस्य ।

**मलानामागन्तुकत्वादिति** । यथा स्फटिकस्य स्वच्छस्यौपाधिको वर्णान्तरानुरागः, एवं स्वच्छस्यात्मनो मिथ्याज्ञानप्रभवो मलसम्भव इति । सूर्यस्येवाभ्रादिकावरणापगमे स्वरूपेणावस्थानमिति ।

**अनुबन्धवृत्तित्वात् क्लेशानामिति** अनुबन्धेनैकस्योत्पत्तौ पुनरन्यस्योत्पत्तिरित्येवं-

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

क्लेशानाम्'इति, तदप्यसत्यम्, सुषुप्तावस्थायामस्पृष्टस्य दोषैरात्मनः प्रत्यहमुपलम्भात्, जाग्रतोऽपि काचन तादृशी दशा दृश्यत एव यस्यामेवात्मस्वरूप एवात्मा निर्मलोऽवतिष्ठते । यथोक्तम् 'अहरहर्ब्रह्मलोकं यान्ति' इति, तदलमनेन दोषानुबन्धकथानुबन्धेन ।

यदपि प्रवृत्त्यनुबन्धादिति, तदपि सूत्रकृता समाहितम्, 'न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य'इति । दोषेषु बन्धहेतुषु विगलितेषु प्रवृत्तिरपि न देहेन्द्रियादिजन्मने प्रभवतीति ।

**दोषक्षयान्तरमनुष्ठितानां कर्मणां न बन्धहेतुत्वम्**

ननु दोषक्षयान्मा भूदुत्तरः कर्मसङ्ग्रहः ।
कथं फलमदत्त्वा तु प्राक्तनं कर्म शाम्यति ।।

अत्र केचिदाहुः, ददत्येव कर्माणि फलम्, दत्त्वा शाम्यन्ति, तथापि न बन्धहेतवो भवन्ति, यतः शमसन्तोषादिजनितं योगिनः सुखमुपपाद्य धर्मो विनङ्क्ष्यति, अधर्मश्च शीतातपक्लेशादिद्वारकं दुःखं दत्त्वेति ।

नन्वमुष्मात् कर्मण इदं फलं भवतीति कर्मफलानां कार्यकारणभावनियमात् कथमियता कर्मफलोपभोगो भवेदित्यन्यथा तदुपभोगमपरे वर्णयन्ति, योगी हि योगर्द्धिसिद्धया विहितनिखिलनिजधर्माधर्मकर्मा निर्माय तदुपभोगयोग्यानि तेषु तेषूपपत्तिस्थानेषु तानि तानि सेन्द्रियाणि शरीराणि रण्डान्तःकरणानि च मुक्तैरात्मभिरुपेक्षितानि गृहीत्वा सकलकर्मफलमनुभवति प्राप्तैश्वर्य इतीत्थमुपभोगेन कर्मणां क्षयः ।

**ज्ञानेनैव कर्मक्षयः**

अन्ये त्वाचक्षते, किमनेन भोगायासेन अदत्तफलान्येव कर्माणि योगिनो

---

रूपेणोत्पन्नस्य च तस्यैव पुनरुत्पत्त्या सदात्मनस्तैरवियुतत्वात् तदनुबन्धित्वम्'।

**अहरहर्ब्रह्मलोकं यान्तीति** । सुषुप्तावस्थाभिप्रायेणाह ।

**'न प्रवृत्तिः प्रतिसन्धानाय'** इति पदं **'न देहेन्द्रियजन्मने प्रभवति'** इत्यनेन व्याख्यातम् ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

नङ्क्ष्यन्ति, तत्त्वज्ञानस्यैव भगवत इयान् प्रभावो यदस्मिन्नुत्पन्ने चिरसञ्चितान्यपि कर्माणि सहसैव प्रलयमुपयान्ति, भोगादपि तेषां प्रक्षयः शास्त्रप्रामाण्यादेवावगतः, तथा तत्प्रामाण्यादेव तत्त्वज्ञानादपि तत्प्रक्षयं प्रतिपत्स्यामहे । तथा चाह,

यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ।। इति ।

न चेदं श्रद्धामात्रं वेदविदामग्रण्या व्यासमुनिनैव समभिधानाद् अवेदार्थं हि नासावभिदधीतेति ।

**दोषक्षयेऽपि कर्मणां न दाह इति मतप्रदर्शनम्**

तदन्ये न मन्यन्ते, न सर्वात्मना कर्मणां दाहः किन्तु स्वरूपेण सतामपि सहकारिवैकल्यात् स्वकार्यकरणोदासीनता तेषां भवति भृष्टानामिव बीजानामङ्कुरकरणकौशलहानिः । यतः सामग्री कार्यस्य जनिका न केवलं कारकम् अतो न कर्माण्येव केवलानि फलोपभोगयोग्यशरीरेन्द्रियादिजन्मनिमित्ततामुपयान्ति किन्तु मिथ्याज्ञानेन दोषैश्च सहितानि । तदुक्तम् 'अविद्यातृष्णे धर्माधर्मौ च जन्मकारणम्' इति । तत्त्वविदश्च तत्त्ववित्त्वादेव नाविद्या मिथ्याज्ञानात्मिका भवति, दोषाणान्तु प्रशमे दर्शित एव क्रमः, तदभावे भवन्तावपि धर्माधर्मौ न बन्धाय कल्पेते । न हि स्वकार्यमङ्कुरादि कुसूलवर्तीनि बीजानि जनयितुमुत्सहन्ते, भृष्टबीजानामपि स्वरूपशक्तिरपि तानवं गता, तद्वत् कर्मणां स्वरूपशक्तिशैथिल्यं नाम मा भूत् तथापि कुसूलवर्तिबीजवत् सहकारिवैधुर्यात् कार्यानारम्भ इति । तदिदमुक्तम् 'न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य' इति ।

**कर्मसु स्वरूपेण स्थितेषु कथमपवर्ग इत्यस्य परिहारः**

ननु स्वरूपसत्तायां धर्माधर्मयोः कथमिदमुक्तम् 'नवानामात्मगुणानां निर्मूलोच्छेदोऽपवर्ग' इति, नैष दोषः, मनःसंयोगवदकिञ्चित्करयोरवस्थान-

---

**अविद्यातृष्णे इति । तृष्णाशब्देन रागादयः क्लेशा अभिहिताः ।**

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

मप्युच्छेदान्न विशिष्यते । उक्तस्यात्मनो विभुत्वादपरिहार्यो मनःसंयोगः, न च तदानीमसौ सन्नपि सुखदुःखज्ञानादिजन्मनि व्याप्रियते, एवं धर्माधर्मौ सन्तावपि फलमाक्षिपन्तौ किं करिष्यत इति फलत उच्छिन्नावेव भवतः । तस्मान्नवानामात्मगुणानामुच्छेदोऽपवर्ग इत्यविरुद्धम् । एवं प्रवृत्त्यनुबन्धस्यापि बन्धहेतोरभावान्न दुर्गमोऽपवर्गः ।

**कर्मणामुपभोगादेव क्षय इति मतम्**

अपरे पुनराहुः, कर्मफलानां शास्त्रतः कार्यकारणभावनियमावगतेः शमसन्तोषशीतातपादिद्वारकसुखदुःखमात्रोपपादनेन कर्मपरिक्षयानुपपत्तेः, योगद्धर्या च दीर्घकालावधिसुखदुःखोपभोगस्य सकृदेव सम्पादयितुमशक्यत्वात्, ज्ञानाग्निना च दाहे तत्कर्मोपदेशिवैदिकवचनसार्थानर्थक्यप्रसङ्गात्, अदत्तफलस्य कर्मणोऽनुपरमात्, अवस्थानपक्षे चिरमप्युषित्वा कुसूलावस्थितबीजवत् कालान्तरेणापि तत्फलाक्षेपप्रसङ्गादवश्यं स्वफलोपभोगद्वारक एव कर्मक्षयो वाच्यः । न चानिर्मोक्ष आशङ्कनीयश्चिरादपि तत्सिद्धिसम्भवात् । तथा च मुमुक्षुर्नित्यनैमित्तिकं कर्मावश्यमनुतिष्ठेदननुतिष्ठन् प्रत्यवेयादिति तत् कुतोऽस्य बन्धः स्यात् । काम्यं निषिद्धञ्च कर्म स्वर्गनरककारि विस्पष्टमेव बन्धसाधनमिति तत् परिहरेदेवेत्येवं तावदुत्तरोऽस्य न कर्मसञ्चयः प्रवर्तते । तदाह,

नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ।
मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।। इति ।

प्राक्तनस्य तु कर्मसञ्चयस्य भोगादेव क्षयः । आत्मविदश्च मुमुक्षोरयमनुष्ठानक्रमो भवति नेतरस्येति स एवेत्थमपवर्ज्येतेति । आह च,

आत्मज्ञे चैतदस्तीति तज्ज्ञानमुपयुज्यते ।
तत्र ज्ञातात्मतत्त्वानां भोगात् पूर्वक्रियाक्षये ।।
उत्तरप्रचयासत्त्वाद्देहो नोत्पद्यते पुनः ।

---

**आत्मज्ञे चैतदस्तीत्यस्य पूर्वमर्धम्, "प्राथ्यंमानं फलं ज्ञातं नानिच्छोस्तद् भविष्यति" । इति । उत्तरस्य भाविनः कर्मप्रचयस्याकरणादेवासत्त्वात् ।**

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

**आत्मतत्त्वज्ञस्य नित्यकर्मानुष्ठानेऽपि मोक्षसम्भावना**

ननु नित्यकर्मानुष्ठानपक्षे नास्त्येव मोक्षः, यान्येव हि नित्यानि दर्शपौर्णमासादिकर्माणि 'यावज्जीवं दर्शपौर्णमासाभ्यां यजेत'इत्यादिचोदनोपदिष्टानि तान्येव फलवन्ति श्रूयन्ते इति काम्यान्यपि भवितुमर्हन्ति, 'दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत, अग्निहोत्रं जुहुयात् स्वर्गकामः' इति । न, फलाभिसन्धानपूर्वकत्वेनाप्रयोगात् । यथाह,

प्रार्थ्यमानं फलं ज्ञातं नानिच्छोस्तद्भविष्यति ।

इति संयोगप्रवृत्तौ विशेषः, प्रयोगेऽपि विशेषः । काम्यं कर्म सर्वाङ्गोपसंहारेण प्रयुज्यमानं फलसाधनमिति । यथा शक्तिस्तत्तथा प्रयोक्तव्यमिति, नित्यस्य कर्मणोऽकरणात् प्रत्यवाय इति यथाशक्त्यपि तत् प्रयोक्तव्यम्, अनुष्ठाता तु सर्वाण्यङ्गानि यद्यसावुपसंहर्तुं न शक्नुयान्मा प्रवर्त्तिष्ट न त्वप्रवर्तमानः प्रत्यवेयादिति । एवं तदेव दर्शपौर्णमासादिकर्म 'यावज्जीवम्' इति चोदनयोपदिष्टं नित्यं सत् तत्फलानभिसन्धानात् प्रयुक्तं न बन्धाय कल्पते । क्व सा स्वर्गसाधनशक्तिरस्य गतेति चेत्, न वयं कर्मणां शक्तिमशक्तिं वा प्रत्यक्षतः पश्यामः, शास्त्रैकशरणास्तु श्रोत्रिया वयम् । चोदनैव धर्मे प्रमाणमिति नः कुलव्रतमेतत् । सा च चोदनैकत्र कामिनमधिकारिणमाश्रित्य प्रवृत्ता तदधिकारश्च फलनिर्वृत्तेर्विना न स्यादिति फलपर्यन्ततां प्रतिपद्यते, अन्यत्र तु यावत्पदोपबद्धजीवनपदार्थावच्छिन्नाधिकारिलाभेन प्रवर्तमाना न फलाय भवति, अक्रियमाणे तु शास्त्रार्थे प्रत्यवायाय प्रभवत्यधिकृतेन सता शास्त्रार्थस्त्यक्त इति । काम्ये त्वनुत्पन्नकामोऽधिकृत एव न भवति इति नाधिकृतेन सता विधिस्त्यक्त इति न प्रत्यवैतीति । उपक्रम्य त्वन्तराले त्यक्तुं न लभ्यत एव, वीतायां फलेच्छायामवाप्ते वा फले तत्कर्मसमापनमवश्यकर्त्तव्यमेव तदित्यलं शास्त्रान्तरगर्भेण भूयसा कथाविस्तरेण, सर्वथा सुष्ठूक्तं नित्यनैमित्तिके

---

**वीतायां फलेच्छायामिति । तथाहि, फलेच्छया कर्मणि प्रवृत्तस्य यदि मध्ये फलेच्छा व्यपेयात् तथाप्यसौ शिष्टविगर्हणभयात् कर्म समापयति एवं वृष्ट्यर्थं च कारीर्यां**

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

कुर्यादिति । न खलु सुलभोऽयं पुरुषार्थः । किं न श्रुतमिदमायुष्मता व्यासवचनम्,

'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इति ।

ज्ञानाग्निदाहवचनन्तु ज्ञानप्रशंसार्थमेव । सोऽयं ज्ञानकर्मसमुच्चयान्मोक्ष उच्यते ।

**उपभोगेन क्षये कर्मणां न मोक्षसम्भावनैव**

अत्राभिधीयते, न खलु फलोपभोगद्वारकः कर्मणां परिक्षयो जन्मशतैरपि शक्यक्रियः । उक्तं हि,

एकमेवेदृशं कर्म कर्त्तुमापतति क्वचित् ।
जन्मायुतशतेनापि यत्फलं भुज्यते न वा ।।
देहैस्तत्कर्मभोगार्थैः कर्मान्यन्न करिष्यते ।
कर्मसाधनमित्येषा दुराशैव तपस्विनाम् ।।

तदीदृशमेनं मोक्षपथमुपदिशद्भिर्याज्ञिकैर्मोक्षोपेक्षणमनक्षरमुपदिष्टं भवतीति, तस्मात् पूर्वोक्तनीत्यैव कर्मणां बन्धहेतुत्वमपाकरणीयम् ।

ननु पक्षचतुष्टयेऽपि दोष उक्तः ? न, चतुर्थपक्षस्य निरवद्यत्वात् सहकारिवैकल्यात् कुसूलावस्थितबीजवत् कर्मणामनारम्भकत्वे सति न कश्चिद्दोषः । एष एव च तेषां दाहो यत् कार्यानारम्भकत्वम् ।

नन्वविनष्टस्वरूपाणि कुसूलबीजवदेव कदाचिदारप्स्यन्ते कार्याणि तस्माद् वरमुच्छिद्यन्तामेव, किमिदानीं नित्यमात्मानमप्युच्छेत्तुं यतामहे स हि पुरा भोक्ताभूदिति मुक्तोऽपि पुनर्भोक्तृतां प्रतिपद्येतेति वरमुच्छिद्यतामेव ।

---

प्रस्तुतायां मध्ये वृष्टिसम्भवेऽपि तां समापयत्येव शिष्टविगर्हणभयादेव । **किं त्वया ज्ञातमधुनैव हुंकृत्येति** । हुंकृत्येत्यनेन शैवशास्त्रप्रसिद्धं दोक्षाविधानमन्त्रं सोत्प्रासं दर्शयति । ते हि विशिष्टमन्त्रोपपादितदीक्षासमनन्तरमेवाशेषपाशविमोचनाद् मुक्तिमभिमन्यन्ते ।

**ज्ञानकर्मसमुच्चयात्** । ज्ञानेन नित्यकर्मानुष्ठानेन च ।

**मोक्षपथमुपदिशद्भिर्याज्ञिकैरिति** । भद्रान् (भाट्टान् ?) परामृशति ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

सामग्र्यभावात् कथं भोक्तृतां गच्छेदिति चेत्, कर्माण्यपि सहकार्यभावात् कथं कार्यमारभेरन् ? न च कर्मणां बन्धकरणे रागादयो न सहकारिण इति वक्तुं शक्यम्, 'वीतरागस्य जन्मादर्शनात्' इत्यसकृदुक्तत्वात् । तस्मादयमेव सूत्रकारोपदिष्टः पन्थाः पेशलः, 'न प्रवृत्तिः प्रतिसन्धानानाय हीनक्लेशस्य' इति ।

**ज्ञानकर्मसमुच्चयस्य मोक्षहेतुत्वखण्डनम्**

यच्चेदमुच्यते 'ज्ञानकर्मसमुच्चयान्मोक्षः' इति, तत्रेदं वक्तव्यम्, कर्मणां कीदृशो मोक्षं प्रत्यङ्गभावः ? न हि कर्मसाध्यो मोक्ष इत्युच्यते, स्वर्गादिवदनित्यत्वप्रसङ्गात् । अपि चात्मैव स्वरूपावस्थितो मोक्ष इत्युच्यते, न चात्मस्वरूपं कर्मसाध्यम्, अनादिनिधनत्वेन सिद्धत्वात् ।

ननु नित्यकर्माननुष्ठाने प्रत्यवेयादिति तद्द्वारकबन्धपरिहारोपायत्वात् कर्मापि मोक्षाङ्गं स्यात् ? न, सन्न्यासविधानस्य प्रत्यक्षोपदेशादित्युक्तत्वात् । अपरिपक्वकषायाणां शनैः शनैस्तत्परिपाकौपयिकत्वेन कर्मानुष्ठानं पारम्पर्येणापवर्गोपाय इति तु बाढमभ्युपगम्यते । यथाह मनुः,

'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' इति ।

अध्यात्मविदश्च ज्ञानकाण्डौपयिकमेव क्रियाकाण्डमन्यत्, साक्षात्तु कर्मसाध्येऽपवर्गे स्वर्गवदपायित्वप्रसङ्गात्, कृतकस्य सर्वस्यानित्यत्वात् तत्त्वज्ञानमेव मोक्षोपाय इत्युक्तम् ।

यदपि यमनियमादिषु साध्यभूतं तदपि तदङ्गतां गच्छन् न वार्यते, तत्कार्यत्वेऽपि यावद्गुणप्रध्वंसाभावस्वभावत्वान्मोक्षस्य न क्षयित्वं स्वर्गवदन्यस्तु न मोक्ष इत्युक्तम् ।

---

**अध्यात्मविदश्चेति** । यथोक्तं प्राक् श्रौतस्मार्तकर्मानुष्ठानात् कषायपरिपाकद्वारेणोत्पन्नातिशयस्य आत्मज्ञानेऽधिकारात् । "तमेव वेदानुवचनेन ब्राह्मणाविविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन च" इत्यादिविधिभिश्च कर्मणामात्मज्ञानसहकारित्वेन विनियोगात् । यथा प्रतिपादितम् "महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः" इति ।



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

तत्पूर्वोक्तप्रक्रमेणापवर्गप्राप्तेस्तत्त्वज्ञानमेवाभ्युपायः ।

कर्म त्वङ्गम्, तत्र शौचादि किञ्चित् किञ्चित् स्यादात्मसंस्कारपूर्वम् ।

**तत्त्वज्ञानस्यापवर्गसाधनतायां शङ्का**

आह, तत्त्वज्ञानमिदानीं चिन्त्यतां किंविषयं तदपवर्गाय कल्पते, कुतो वा तस्य निःश्रेयससाधनत्वमवगतमिति ।

नन्वात्मज्ञानमपवर्गहेतुरिति बहुशः कथितमेवैतदिति कोऽयं प्रश्नः ? न, विप्रतिपत्तेः, विप्रवदन्ते ह्यत्र वादिन एक एवायमविद्यापरिकल्पितजीवात्मविभागः परमात्मा तत्त्वज्ञानादविद्यापाये मोक्ष इति ब्रह्मवादिनः । शब्दाद्वैतनिश्चयादिति वैयाकरणाः । विज्ञानाद्वैतदर्शनादिति शाक्यभिक्षवः । प्रकृतिपुरुषविवेकविज्ञानादिति पारमर्षाः । ईश्वरप्रणिधानादिति चान्ये । तदेवं कस्मै तत्त्वज्ञानाय स्पृहयन्तु मुमुक्षव इति वाच्यम् ।

**आत्मतत्त्वज्ञानमेव निःश्रेयससाधनम्**

उच्यते, भिन्नास्तावदात्मान इति गृह्यताम्, आत्मज्ञानमेव च निःश्रेयसाङ्गमिति । यत्तु कुतस्तस्य नि श्रेयससाधनत्वमवगतमिति, अक्षपादवचनादिति ब्रूमः । अक्षपादस्तावदिदमुपदिष्टवान् 'आत्मज्ञानान्निःश्रेयसाधिगमः' इति । न च निष्प्रमाणकमर्थमेष ऋषिरुपदिशतीति भवितव्यमत्र प्रमाणेन । तत्तु वैदिकविधिवाक्यम् 'आत्मा ज्ञातव्यः' इति । स एष तावन्निरधिकारो विधिः । अधिकाररहितस्य च विधेः प्रयोगयोग्यत्वाभावादधिकारान्वेषणमुपक्रमणीयम् । परप्रकरणपरिपठनविरहाच्च नास्य सम्पदादिविधिवत् प्रधानाधिकारनिवेशित्वम्, अतो विश्वजिदधिकरणन्यायेन स्वर्गकाममधिकारिणमिह यावदुपात्तमध्यवस्यामस्तावदेव च 'न पुनरावर्त्तते' इत्यर्थवादसमर्पितेयमपुनरावृत्तिरेव हृदयपथमवतरति 'रात्रिसत्र इव प्रतिष्ठा' इति तामेवास्य फलत्वेन प्रतिपद्यामहे ।

सा चेयं साध्यमानापि रूपादेव हि शाश्वती ।
चकास्त्यपुनरावृत्तिर्न स्वर्गवदपायिनी ।।

---

**आत्मसंस्कारपूर्वमिति । आत्मसंस्कारस्य कैवल्यप्राप्तियोग्यतायाः कारणम् ।**

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

ननु दृष्टप्रयोजनालाभे सत्यदृष्टप्रयोजनपरिकल्पनावसरः, इह च दृष्टमेव प्रयोजनमात्मज्ञानस्य कर्मप्रवृत्तिहेतुत्वमुपलभ्यते, नित्येनात्मना विना भूतेष्वेव चेतनेषु श्मशानावधिषु बहुवित्तव्ययायाससाध्यानि को नाम ज्योतिष्टोमादिकर्माण्यनुतिष्ठेदिति नित्य आत्मा परलोकी ज्ञातव्यः । एवं हि निर्विशङ्कः कर्मसु प्रवर्तेतेति । तदिदमनुपपन्नम्, अन्यत एव सिद्धत्वात् । प्रत्यभिज्ञाप्रत्यक्षप्रत्ययेन, जैमिनीयैरनुमानमहिम्ना च नैयायिकादिभिरात्मा नित्य इति निश्चित एव किमत्र विधिः करिष्यतीति । कर्त्तव्यताकलापोपदेशश्च तदानीमत्यन्तनिष्प्रयोजनः स्यात्, अमी च तथ्या नाम पातिमहान्तो वेदग्रन्था इयत्येव पर्यवसिता इति, तदिदमुपनतं सेयं महतो वंशस्तम्बाल्लट्वा निष्कृष्यत इति । तस्मादर्थवादसमर्पितमपुनरावृत्तिरूपमेव फलमात्मज्ञानविधिरवलम्बत इत्येवं केचित् ।

सूक्ष्मतरदर्शिनस्त्वाहुः, इयमपि महती दुर्गतिर्यदर्थवादमुखप्रेक्षित्वम् अस्योत्तमाधिकारविधेः विश्वजिति रात्रिसत्रे वा किमन्यत् क्रियताम्, न हि विधिस्वरूपपर्यालोचनातः कश्चिदधिकारी लभ्यते इति बलात् स्वर्गकामादिः कल्प्यते वा अर्थवादसमर्पितो वावलम्ब्यते । यत्र तु विधिस्वरूपमहिम्नैव तदुपलम्भस्तत्र किं कल्पनया, किमर्थवादवदनावलोकनदैन्येन वा । इह च स्वाध्यायोऽध्येतव्य इतिवदग्नीनादधीतेतिवद् वा कृत्येन द्वितीयया वेप्सिततमनिर्देशात् तन्निष्ठत्वमेवावतिष्ठते । तत्र यथा अग्न्यर्थतया आधानविधिरवगम्यमानोऽग्नीनामनेकविधपुरुषार्थौपयिककर्मकलापोपयोगात् तदर्जनेनैव कृतार्थत्वमुपगत इति न फलान्तरमपेक्षते, यथा वा स्वाध्यायोऽध्येतव्य इत्यक्षरग्रहणार्थत्वादस्य विधेरक्षरग्रहणस्य च फलवत्कर्मावबोधद्वारेण परमपुरुषार्थोपायत्वावधारणान्न तदतिरिक्तघृतमधुकुल्यादिफलान्तरापेक्षित्वम्, न चाध्ययनाविध्यङ्गत्वं स्वमहिम्नैवेप्सिततमसंस्कारद्वारकाधिकारलाभात् । एवमिहाप्यपहतपाप्मत्वा-

---

**इतिकर्तव्यताफलोपदेशश्चेति ।** उपासनादिक क्रमप्रतिपादकवाक्यविशेषाः ।

**महतो वंशस्तम्बादिति ।** वंशस्तम्बं महान्तम्, तं छित्त्वा मध्याद् बालक्रीडनकस्य लट्वाभिधानस्य निष्कर्षणं यद्वदिति ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

द्यात्मस्वरूपपरिज्ञानमेव तस्य परमपुरुषार्थतामवबोधयन् अस्य विधेरन्यप्रयोजनतामापादयति। कश्चित् किल संस्कारविधिः संस्क्रियमाणप्रयोजनापेक्षया परमुखप्रेक्षी भवति व्रीहीन् प्रोक्षतीतिवत्, कश्चित्तु संस्क्रियमाणप्रयोजनमलभमानस्तदीप्सिततमत्वानिर्वाहणात् संस्कारविधित्वमेव जहाति सक्तून् जुहोतीतिवत्। यथोक्तम्,

भूतभाव्युपयोगं हि द्रव्यसंस्कारमिष्यते।
सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित् ।। इति।

संस्कार्यमनर्घमिव रत्नमपर्युषितमिवामृतमनस्तमिव चन्द्रबिम्बमपरिम्लानमिव शतपत्रमस्ति। कस्तर्हि प्रकरणपाठापेक्षायामर्थवादमुखप्रेक्षणे, फलकल्पनायां वाभिलाषः ? अत एव न कामश्रुतप्रयुक्तत्वमाधानस्य, न चाचार्यकरणविधिप्रयुक्तत्वमध्ययनस्येति, तस्मात् स्वाध्यायाध्ययनाग्न्याधानविधिसमानयोगक्षेमत्वादात्मज्ञानविधेः तत एवात्मज्ञानमपवर्गार्थमवगम्यते। तथाविधस्वरूप आत्मैव परोपजनितधर्मरहितोऽपवर्ग इत्युच्यते यतस्तदिदमित्थमात्मज्ञानमेव निःश्रेयससाधनमनन्यलभ्यमिति तमेवोपदिष्टवानाचार्योऽक्षपादः। यत्तु विज्ञानसत्तात्मशब्दाद्यद्वैतदर्शनं तन्मिथ्याज्ञानं वेति न निःश्रेयससाधनम्।

**ब्रह्माद्वैतदर्शनम्**

ननु कथमद्वैतदर्शनं मिथ्या कथ्यते तत् प्रत्युत द्वैतदर्शनम्, अविद्या, मायापि, मिथ्याज्ञानमिति युक्तम्। तथा हि प्रत्यक्षमेव तावन्निपुणं निरूपयतु भवान्।

---

**व्रीहीन् प्रोक्षतीति** व्रीहीणां पुरोडाशसाधनत्वाद् भाव्युपयोगित्वं संस्कारविधित्वमेव जहाति।

**सक्तून् जुहोतीतिवदिति**। अत्र सक्तूनां भूतभाव्युपयोगाभावेनानपेक्षणात् संस्कार्यत्वाभावम्। न च प्रयाजादीनामिवेतिकर्तव्यताया अपेक्षणम्, होमसंस्कृतानामक्रियारूपत्वेनेतिकर्तव्यतात्वाभावात् सक्तूनाम्, होमस्य तु क्रियारूपत्वादितिकर्तव्यतात्वेनान्वयो युक्तः स च द्रव्यापेक्षित्वात् तादर्थ्यमेव सक्तूनामिति। अत एव न कामश्रुतिप्रयुक्तत्वमाधानस्य तत्संस्कार्यस्य प्रयोजनवत्त्वेनैव तदर्थानुष्ठानसिद्धेः।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

तत्र हि यदन्यानपेक्षतया झटिति पदार्थस्वरूपमवभासते तत् पारमार्थिकमितरत् काल्पनिकमिति गम्यते । सद्रूपमेव च तत्राभिन्नमन्यनिरपेक्षमवभाति, भेदस्त्वन्यापेक्षयेति नाक्षरणविज्ञानविषयतामुपयाति । तत्र यथा मृद्रूपतातः प्रवृत्ति यावत् कुम्भावस्थेति, अस्मिन्नन्तराले आविर्भवताञ्च घटकपालशकलशर्कराकणादीनां रूपमपरमार्थसदेव व्यवहारपदवीमवतरति, परमार्थतस्तु मृत्तिकैव । यथाहुः 'मृत्तिकेत्येव सत्यम्' इति, एवं तदपि मृत्तिकारूपं सत्तापेक्षया न परमार्थसदिति सत्तैव सर्वत्र परमार्था तदेव सल्लक्षणं ब्रह्मेत्याहुः । आगमश्च 'एकमेवाद्वितीयम्' इत्यादिरभेदमेव दर्शयति 'नेह नानाऽस्ति किञ्चन मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इति च । वेदस्य च सिद्धेऽप्यर्थे प्रामाण्यमुपवर्णितमेव भवद्भिः । न च प्रत्यक्षविरुद्धत्वमभेदशंसिनो वक्तुं शक्यमागमस्य । न ह्यन्यनिषेधे प्रत्यक्षं प्रभवति, स्वरूपमात्रग्रहणपरिसमाप्तव्यापारत्वात् । पररूपमन्तरेण च भेदस्य दुरुपपादत्वाद्, भेदे कुण्ठमेव प्रत्यक्षमिति कथमभेदग्राहिणमागमं विरुन्ध्यात् । तदुक्तम्,

आहुर्विधातृप्रत्यक्षं न निषेध्यं विपश्चितः ।
नैकत्वमागमस्तेन प्रत्यक्षेण विरुध्यते ॥

**तत्र शङ्का**

नन्वेकमेव ब्रह्म न द्वितीयं किंचिदस्ति, तर्हि तद् ब्रह्म नित्यशुद्धबुद्धस्वभावत्वान्मुक्तमेवास्ते, केन तद्बद्धमिति, किमर्थोऽयं मुमुक्षूणां प्रयत्नः, कुतस्त्यो वा अयं विधिर्न जगदवभासकः ? अविद्योच्छेदार्थे मुमुक्षुप्रयत्न इति ब्रूमः, ततस्त्य एवायं विचित्रजगदवभासः ।

---

**मृत्तिकेत्येव सत्यमिति** । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति । नामधेयं घट इति, विकारश्च पृथुबुध्नोदरत्वादिसन्निवेशविशेषः, वाचारम्भणं वागिन्द्रियस्य शब्दोच्चारणे प्रवर्तकम्, वस्तुतस्तु न किञ्चिन् मृत्तिकैव परमार्थ इति । वाचेति षष्ठ्यर्थे तृतीया । आरम्भणम् आलम्बनम् ।

**सल्लक्षणं ब्रह्मेति** । ब्रह्म हि व्यापकं सूच्यते । सत्तायाश्च सकलवस्तुव्यापकत्वात् तत्त्वम् । न तु 'एकमेवाद्वितीयमेव' इत्यादेरागमस्य सिद्धार्थप्रतिपादकत्वेन प्रामाण्यमेव नास्तीति तदाह **वेदस्य च सिद्धेऽप्यर्थे** इति ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

केयमविद्या नाम, ब्रह्मणो व्यतिरिक्ता चेत् नाद्वैतम् । अव्यक्तिरेके तु ब्रह्मैव सा, ततो नान्येत्येषेति कथमुच्छेद्यते ? मैवम्, न वस्तुनीदृशि तार्किकचोद्यानि क्रमन्ते । अविद्या त्वियमवस्तुरूपा माया मिथ्यावभासस्वभावा अभिधीयते । तत्त्वाग्रहणमविद्या, अग्रहणञ्च नाम कथं वस्तुधर्मे विकल्प्यते ?

ननु तत्त्वाग्रहणरूपापि कस्येयमविद्या ? न हि ब्रह्मणो नित्यप्रबुद्धस्वभावत्वादविद्या भवति, अन्यस्तु नास्त्येव तदाश्रयः, न च निरधिकरणमेव मिथ्याज्ञानं भवितुमर्हति ?

**शङ्कायाः समाधानम्**

उच्यते, जीवात्मनामविद्या न ब्रह्मणः ।

ननु के ते जीवात्मानस्तेऽपि ब्रह्मणोऽन्या अनन्यतया चिन्त्या एव ? आः क्षुद्रतार्किक ! सर्वत्रानभिज्ञोऽसि । ब्रह्मैव जीवात्मानः न ततोऽन्ये । न हि दहनपिण्डाद् भेदेनापि भान्तः स्फुलिङ्गा अग्निस्वरूपा न भवन्ति । तत् किं ब्रह्मण एवाविद्या ? न च ब्रह्मणोऽविद्या । यथा चैकमेव घंटाद्यावरणोपहितभेदतया भिन्नमिव विभाति नभः पटाकाशं घटाकाशमिति तदावरणवशादेव च रजोधूमादिकलुषितमपि भवति, तदावरणविरतौ तु गलितकालुष्यमले तत्रैव परमे व्योम्नि लीयते, तथैव चात्मानोऽप्यविद्यापरिकल्पितभेदात् तत्कृतमनेकप्रकारकालुष्यमनुभवन्ति, तदुपरमे च परब्रह्मणि लीयन्त इति च ।

**पुनस्तत्रैव शङ्का तत्समाधानञ्च**

नन्वेवमप्यविद्यापरिकल्पित एष ब्रह्मजीवात्मविभागः, सा च जीवा-

---

**ततस्त्य एव चायमिति** । ततस्त्योऽविद्यात आगतः ।

**न हि दहनपिण्डादिति** । तथा च श्रुतिः "तदेतत् सत्यम्,

यथा प्रदीप्तात् पावकाद् विस्फुलिङ्गाः
सहस्रशः प्रभवन्ति सरूपाः ।
तथाक्षराद् विविधाः सौम्य भावाः
प्रजायन्ते तत्र चैवापयान्ति ॥"

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

त्मनामविद्येत्युच्यते, तदेतदितरेतराश्रयमापद्यते, अविद्याकल्पनायां सत्यां जीवात्मानो जीवात्मसु च सत्स्वविद्येति ? भवत्वितरेतराश्रयत्वम् अविद्या-प्रपञ्च एवायमशेषः, कस्यैष दोषः, यदि चानादित्वम्, अस्य परिहारो बीजाङ्कुर-वद् भविष्यति, भवद्भिरपि चायमनादिरेव संसारोऽभ्युपगतः, अविद्यैव च संसार इत्युच्यते ।

नन्वनादेरविद्यायाः कथमुच्छेदः ? किमनादेरुच्छेदो न भवति भूमे रूपस्य ? भवद्भिर्वा कथमनादिस्संसार उच्छेद्यते ? ननूपाये सत्यनादिरप्युच्छे-द्यते, अद्वैतवादिनान्तु कस्तदुच्छेदोपायः ? अविद्यैवेति ब्रूमः । श्रवणमनन-ध्यानादिरप्यविद्यैव, सा त्वभ्यस्यमाना सत्यविद्यान्तरमुत्सादयति स्वयमप्युत्-सीदति, यथा पयः पयो जरयति स्वयं च जीर्यति, विषं विषान्तरं शमयति स्वयं च शाम्यति, यथा वा द्रव्यान्तररजः क्षिप्तं रजःकलुषितेऽम्भसि तच्चा-त्मानं संहृत्य स्वच्छमम्बु करोति, तदेवमियमविद्यैवाविद्यान्तरमा-च्छिन्दन्ती विद्योपायतां प्रतिपद्यते ।

ननु स्वरूपेणासत्यैवेयमविद्या कथं सत्यकार्यं कुर्यात् ? उच्यते,

असत्यादपि सत्यार्थसम्पत्तिरुपपत्स्यते ।
मायासर्पादयो दृष्टाः सत्यप्रभयहेतवः ।।

रेखागकारादयश्चासत्याः सत्यार्थप्रतीत्युपाया दृश्यन्ते । स्वरूपेण सत्यास्ते इति चेत्, किं तेन क्रियते ? गकारादित्वेन हि ते प्रतिपादकास्तच्चैषाम-सत्यमिति ।

ननु ब्रह्मणो नित्यशुद्धत्वाज्जीवानाञ्च ततोऽनन्यत्वात् कथं तेष्वविद्या अवकाशं लभेत ? परिहृतमेतद् घटाकाशदृष्टान्तोपवर्णनेनैव । अपि च यथा विशुद्धमपि वदनबिम्बमम्बुमणिकृपाणदर्पणाद्युपाधिवशेन श्यामदीर्घस्थूलादि-रूपमपारमार्थिकमेव दर्शयति तथा ब्रह्मणस्तदभावेऽपि जीवेषु तदवकाश इति ।

**मोक्षे पुनरपि शङ्का**

ननु परमात्मनो नित्यत्वाज्जीवानामप्यन्योन्यमप्यनन्यत्वमित्येकस्मिन्

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

बद्धे मुक्ते वा सर्वे बद्धा मुक्ता वा स्युः ? अयि कुतर्ककलुषितमते ! कथं बोध्यमानोऽपि न बुध्यसे ? घटाकाशेऽपि घटभङ्गात् परमाकाशप्रतिष्ठे जाते पटाकाशोऽपि तथा भवति । एकस्यापि जीवात्मन उपाधिभेदात् सुखदुःखानुभवभेदो दृश्यते पादे मे वेदना शिरसि मे सुखं न वेदनेति, तीव्रतरतरणितापोपनततानुक्लमस्य च यत्रैव शरीरावयवे शिशिरहरिचन्दनपङ्कस्थासकमुपरचयति परिम्लानस्तत्रैव तद्दुःखोपरमानुभवो नेतरत्रेत्येवमेकस्मिन्नपि परमात्मनि कल्पनामात्रप्रतिष्ठेष्वपि जीवात्मसु बद्धमुक्तव्यवस्था सिध्यतीत्येकात्मवाद एवायमागमानुगुण उपयुक्तः, नानन्त्यमात्मनाम् ।

ब्रह्मदर्शनमेवातो निःश्रेयसनिबन्धनम् ।
भेददर्शनमूढानां संसारविरतिः कुतः ।। इति ।

**अद्वैतवादखण्डनम्**

अत्राभिधीयते, कपटनाटकरहस्यप्रक्रियापूर्चोपरचने तदनुगुणदृष्टान्तपरम्परोपपादने च किमुच्यते परं कौशलं भवताम् ! प्रमाणवृत्तनिरूपणे तु तपस्विन एव भवन्तः । तथा हि भेदस्य प्रमाणबाधितत्वात् किम् अयमभेदाभ्युपगमो भवताम्, उत स्विदभेदस्यैव प्रमाणसिद्धत्वादिति ? द्वयमपि नास्ति, प्रत्यक्षादीनि हि सर्वाण्येव भेदप्रतिष्ठानि प्रमाणानि, यत् तावद् भेदस्य परापेक्षत्वान् मृत्पिण्डात् प्रभृति घटकर्परचूर्णपर्यन्तकार्यपरम्परापरिच्छेदे तदनुगतमृद्रूपताग्रहणे च सति मृदस्तदभिन्नरूपत्वमवतार्यते नान्यथा, भिक्षवश्चाचक्षते चाक्षुषं व्यात्तवृस्वलक्षणग्राहि नाभेदविषयम् अभेदस्य परापेक्षत्वादिति । अयमस्मादन्य इतीयं परापेक्षा प्रतीतिरिति चेत्, अयमस्मिन् अनुस्यूत इतीयमपि परापेक्षैव । तदत्रभवांश्च भिक्षुश्च द्वावपि दुर्ग्रहोपहतौ । भेदाभेदग्रहणनिपुणमक्षजमिति परीक्षितमेतद्विस्तरतः सामान्यचिन्तायाम् । अङ्गुलिचतुष्टयं हि प्रतिभासमानमितरेतरविभक्तरूपमप्यनुगतरूपमपि प्रकाशते इत्युक्तम् ।

व्यावृत्तिरनुवृत्तिर्वा परापेक्षास्तु वस्तुषु ।
असङ्कीर्णस्वभावा हि भावा भान्त्यक्षबुद्धिषु ।।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

यदप्युक्तम्, 'आहुर्विधातृप्रत्यक्षम्'इति, तदप्यसाधु, विधातृ इति कोऽर्थः, इदमपि वस्तुस्वरूपं गृह्णाति नान्यरूपं निषेधति प्रत्यक्षमिति चेन्मैवम्, अन्यरूपनिषेधमन्तरेण तत्स्वरूपपरिच्छेदस्याप्यसम्पत्तेः । पीतादिव्यवच्छिन्नं हि नीलं नीलमिति गृहीतं भवति नेतरथा । तथा चाह 'तत् परिच्छिन्नं त्वन्यद् व्यवच्छिनत्ति'इति, भाववदभावमपि ग्रहीतुं प्रभवति प्रत्यक्षमिति च साधितमस्माभिरेवैतत् । तस्मादितरेतरविविक्तपदार्थस्वरूपग्राहित्वान्नाभेदविषयं प्रत्यक्षम् । शब्दानुमानयोस्तु सम्बन्धग्रहणाधीनस्वविषयव्यापारयोर्भेदमन्तरेण स्वरूपमेव नावकल्पत इति तावुभावपि भेदविषयावेव । विशेषविषयत्वाभावेऽपि लिङ्गसामान्यस्य तदितरविलक्षणस्य परिच्छेदात् । वाग्रूपस्य तु परस्परोपरक्तपदार्थपुञ्जस्वभावः इतरपदार्थविशेषितान्यतमपदार्थरूपो वा वाक्यार्थो विषय इति पूर्वमेव निरूपितम्, अतः सर्वथा न भेदस्य प्रमाणाबाधितत्वम् । नाप्यभेदग्राहि किञ्चन प्रमाणमस्ति यथोक्तेनैव न्यायेन । यस्त्वागमः पठितः 'एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन'इत्यादि, तस्यार्थवादत्वान्न यथाश्रुत एवार्थो ग्रहीतव्यः ।

ननु सिद्धेऽप्यर्थे वेदस्य प्रामाण्यमभ्युपगतमेव भवद्भिः, बाढमभ्युपगतम्, किन्तु 'धूम एवाग्नेर्दिवा ददृशे नार्चिः'इत्येवमादीनां प्रत्यक्षादिविरुद्धार्थाभिधायिनामर्थवादानां मुख्यां वृत्तिमपहाय गौण्यापि वृत्त्या व्याख्यानमाश्रितम् । एवमिदमपि वचनमितरप्रमाणाविरुद्धमर्थमभिदधदपरथा व्याख्यायते, ये तु प्रमाणान्तरविरुद्धार्थानुवादिनो न भवन्त्यर्थवादास्तेषामस्तु स्वरूपे प्रामाण्यं 'वायुर्वै क्षेपिष्ठा देवता' इत्येवमादीनाम् । तस्मात् सुखदुःखाद्यवस्थाभेदेऽपि नावस्थातुरात्मनो भेदः, देहेन्द्रियादिनानात्वे वा न तस्य नानात्वमित्येवं यथाकथञ्चिदयमर्थवादो योजनीयः । अभेदोपदेशे तु तत्परः शब्दो विधिरूप इह नास्ति, एवमागमबलादपि नाद्वैतसिद्धिः ।

---

**अस्यार्थवादत्वान्न यथाश्रुत एवेति** । आत्ममाहात्म्यप्रतिपादनेन तदधिगमार्थे शास्त्रार्थे प्ररोचनार्थमिमे अर्थवादाः ।

**तस्मात् सुखदुःखाद्यवस्थाभेदेऽपीत्यादिना** सालम्बनत्वमर्थवादानाह ।



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

यत्पुनरविद्यादिभेदचोद्यमाशङ्क्य परिहृतं तत्राशङ्का साधीयसी समाधानं तु न पेशलम् । तत्त्वान्यत्वाभ्यामनिर्वचनीयेयमविद्यैति कोऽर्थः ?

अनादिना प्रबन्धेन प्रवृत्तावरणक्षमा ।
यत्रोच्छेद्याप्यविद्येयमसती कथ्यते कथम् ।।

अस्तित्वे क एनामुच्छिन्द्यादिति चेत्, कातरसन्त्रासोऽयम् । सतामेव हि वृक्षादीनामुच्छेदो दृश्यते नासतां शशविषाणादीनाम्, तदियमुच्छेद्यत्वादविद्या नित्या मा भूत् सती तु भवत्येव ।

नित्यं न शक्यमुच्छेत्तुं सदनित्यन्तु शक्यते ।
असत्त्वमन्यदन्या च पदार्थानामनित्यता ।।

न च तत्त्वाग्रहणमात्रमविद्या संशयविपर्ययावप्यविद्यैव, तौ च भावस्वभावत्वात् कथमसन्तौ भवेताम् ? ग्रहणप्रागभावोऽपि नासन्निति शक्यते वक्तुमभावस्याप्यस्तित्वसमर्थनादिति सर्वथा नासत्यविद्या ।

असत्त्वे च निषिद्धेऽस्याः सत्त्वमेव बलाद् भवेत् ।
सदसद्व्यतिरिक्तो हि राशिरत्यन्तदुर्लभः ।।

सत्त्वे च द्वितीयाया अविद्याया भावान्नाद्वैतम् ।

यत्तु, ब्रह्मणः सततप्रबुद्धत्वादविद्याक्षेत्रता नेति जीवानामविद्यास्पदत्वमभिहितम्, अविद्योपरमे ब्रह्मणि परमे त एव घटाकाशवल्लीयन्त इति ।

तदपि न चतुरस्रम्, आकाशावच्छेदहेतोर्घटमानत्वात्, अविद्यायास्त्वसत्त्वात् तत्कृतःपरमात्मनोऽवच्छेद इतिविषमोदृष्टान्तः । अवच्छेदकत्वाभावाच्च जीवविभागकल्पनापि निरवकाशैव । यच्चेतरेतराश्रयत्वं परिहर्त्तुमनादित्वमावेदितमविद्यायास्तत्र बीजाङ्कुरवद् वेद्यान्तरोपगतसंसारवच्च तस्याः सत्यत्वमेव

---

**ग्रहणप्रागभावोऽपीति ।** अभेदग्रहणस्यानुत्पत्तिर्भेदग्रहणं चेति द्विविधा अविद्या तैरुक्ता ।

**तत्कृतः परमात्मनोऽवच्छेद** इति । अभिन्नस्य भेदेन प्रतिभासनम् । **वाद्यन्तरोपगतसंसारवच्चेति** । नैयायिकोक्तः संसारो यथाऽनादित्वात् तात्त्विकः तथेयं स्यादिति ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

स्यात्, अनादिप्रबन्धप्रवृत्तत्वे चास्याः प्रतिकूलहेत्वन्तरोपनिपातकृतमपाकरणमुचितम्, एकात्मवादिनान्तु तदतिदुर्घटमित्यनिर्मोक्ष एव स्यात् । यथाह भट्टः,

स्वाभाविकीमविद्याञ्च नोच्छेत्तुं कश्चिदर्हति ।
विलक्षणोपपाते हि नश्येत् स्वाभाविकं क्वचित् ।।
न त्वेकात्माभ्युपाधीनां हेतुरस्ति विलक्षणः ।। इति ।

यत्पुनरविद्यैव विद्योपाय इत्यत्र दृष्टान्तपरम्परोद्घाटनं कृतम्, तदपि क्लेशाय, नार्थसिद्धये, सर्वत्रोपायस्य स्वरूपेण सत्त्वादसतः खपुष्पादेरुपायत्वाभावात्, रेखागकारादीनान्तु वर्णरूपतया सत्त्वं यद्यपि नास्ति तथापि स्वरूपतो विद्यत एव ।

ननु गकारोऽयमिति गृह्यमाणः स रेखासन्निवेशोऽर्थप्रत्यायको भवति न चासौ तेन रूपेणास्ति ।

मैवम्, स्वरूपेणासतोऽर्थस्य रूपान्तरेणापि गृह्यमाणस्य कूटकार्षापणादेरिव व्यवहारहेतुता दृश्यते च युक्ता च । वस्तु स्वरूपत एव नास्ति तस्य स्वात्मना परात्मना वा व्यवहाराङ्गता समस्ति, रेखासन्निवेशश्च स्वरूपेण सन्निति वर्णात्मत्वेनासन्नपि तत्कार्याय पर्याप्नुयान्न त्वयमविद्यायां न्यायः स्वरूपासत्त्वात् तस्याः । सर्पादौ तु सर्पादिस्वरूपवत् तज्ज्ञानस्यापि तत्कार्यत्वमवगतमत एव शङ्काविषस्यापि स्वशास्त्रेषु चिकित्सामुपदिशन्ति । एवं नवगुहाकुहरादेष निःसृतः केसरी सरोषमित एवाभिवर्तत इत्यसत्येऽप्युक्ते यद् भीरूणां भयपलायनादि शूराणाञ्च सोत्साहमायुधोद्यमनादि सत्यं कार्यमुपलभ्यते तत्र सिंहज्ञानस्य तत्कार्यत्वात् तस्य च स्वरूपसत्त्वान्नासत एवोपायत्वम् । एतेन प्रतिबिम्बदृष्टान्तोऽपि प्रत्याख्यातः, खड्गादेर्मुखादिकालुष्यकल्पनाकारणस्य तत्र सद्भावादिह तदसद्भावादिति ।

यद्यपि बद्धमुक्तव्यवस्थासिद्धये पादवेदनाद्युदाहृतम्, तदप्येवमपाकृतम्,

---

**विलक्षणोपपाते हीति ।** यथा अग्निसंयोगोपपाते परमाणुगतायाः श्यामतायाः निवृत्तिः । एकात्मविषयोऽभ्युपायोऽभ्युपगमो येषां तेषां मते न विलक्षणो द्वितीयो हेतुरस्ति आत्मैवाभ्युपायः । अविद्यानिवृत्तौ विद्या हि तदभ्युपायः, सा चात्मनो न भिन्नेति ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अवच्छेदकस्य पादादेस्तत्र तात्त्विकत्वात्, इह तु भेदकल्पनाबीजमद्वैतवादिनो दुर्घटमिति बहुशः प्रदर्शितम् ।

तदेवमत्र वस्तुसंक्षेपः, अविद्यायामसत्यां सर्व एवायं यथोदाहृतो व्यवहारप्रकारस्तत्कृत इति नावतिष्ठते, सत्यान्तु तस्यां नाद्वैतमिति । अत एवाह सूत्रकारः 'संख्यैकान्तासिद्धिः प्रमाणोपपत्त्यनुपपत्तिभ्याम्' इति, यदि तावदद्वैतसिद्धौ प्रमाणमस्ति तर्हि तदेव द्वितीयमिति नाद्वैतम् । अथ नास्ति प्रमाणं तथापि नतरामद्वैतम् अप्रामाणिकायाः सिद्धेरभावादिति ।

मन्त्रार्थवादोत्थविकल्पमूलमद्वैतवादं परिहृत्य तस्मात् ।
उपेयतामेष पदार्थभेदः प्रत्यक्षलिङ्गागमगम्यमानः ।।

**शब्दाद्वैतवादखण्डनम्**

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।। इति ।

---

**सङ्ख्यैकान्तासिद्धिरिति** । अथेमे सङ्ख्यैकान्ताः सर्वमेकं सदविशेषात्, सर्वं द्वैतं नित्यानित्यभेदात्, सर्वं त्रिधा ज्ञाता ज्ञेयं ज्ञानमिति, सर्वं चतुर्धा प्रमाणं प्रमाता प्रमेयं प्रमितिरिति । एवं यथासम्भवमन्येऽपि । तामननेन सूत्रेण निराकरोति ।

**अनादिनिधनमिति** यद् ब्रह्मैवंरूपं तस्य प्राप्त्युपायोऽनुकारश्च वेद इति सम्बन्धः । तथा चैतच्छ्लोकपाठोत्तरकालं कतिपयश्लोकव्यवधानेन--

प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः ।
एकोऽप्यनेकधर्मेव समाम्नातः पृथक् पृथक् ।।

इति पठितम् । तत्रानादिनिधनं ब्रह्मेति स्वयं व्याख्यातम् । प्रत्यक्चैतन्यात्मना विवृनस्याकारेतुत्वादक्षरमित्युक्तम् । तच्च तस्यापारमार्थिकं रूपमद्वैतावस्थायामभावात् । एवमर्थाकारोऽपि तस्यामवस्थायां नास्ति । तदेवाह, विवर्ततेऽर्थभावनेति । ननु यथा प्रधानं साङ्ख्यदृष्ट्या तत्तदाकारपरिग्रहाद् विपरिणामि तथा ततोऽर्थोत्पत्तेर्विपरिणामित्वं प्राप्तमित्याह, प्रक्रिया जगतो यत इति । उत्पत्तेरवास्तवत्वात् प्रक्रियामात्रं संव्यवहारमात्रमेव ततो जगतो न पुनः परमार्थतः किंचिदुत्पद्यते । माययैव व्यवहारपदवीमवतरन्तोऽमी जगदाख्या विकाराः, न तु ब्रह्मणा जन्यन्ते, विशुद्धादविशुद्धोत्पत्त्ययोगात् । विवर्तलक्षणं चाह

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

उच्यते, तत्रानादिनिधनपदनिवेदिता पूर्वापरान्तरहिता वस्तुसत्ता नित्यत्वम् ब्रह्मपदप्रतिपादितञ्च व्यापित्वमित्युभयमपि शब्दस्य प्रागेव निरस्तम् । निरवयवश्च स्फोटात्मा शब्दः प्रतिक्षिप्त एव । यत्तु नित्यं वा किञ्चिदुच्यते तच्छब्दतत्त्वमित्यत्र का युक्तिः ? आह, शब्दोपग्राह्यतया च शब्दतत्त्वम्, तथा हि सर्वः प्रत्यय उपजायमानो नानुल्लिखितशब्दक उपजायते तदुल्लेखविरहिणोऽनासादितप्रकाशस्वभावस्य प्रत्ययस्यानुत्पन्ननिर्विशेषत्वात् । इदमीदृशमित्यादिपरामर्शमुषितवपुषि वेदने वेदनात्मकतैव न भवेत् । येऽपि वृद्धव्यवहारोपयोगिवैधुर्यानवाप्तशब्दार्थसम्बन्धविशेषव्युत्पत्तयो बालदारकप्रायाः प्रमातारस्तेऽपि नूनं यत्, तत्, सत्, किमित्यादि शब्दजातमनुल्लिखन्तो न प्रतियन्ति किमपि प्रमेयम्, अतः शब्दोन्मेषप्रभावप्राप्तप्रकाशस्वभावत्वात् सर्वप्रत्ययानाम् ।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते ।। इति ।

एवमनभ्युपगमे तु संविदः प्रकाशशून्यतया अनधिगतविषयः सर्व एवान्धमूकप्रायो लोकः स्यात् । आह च,

---

हरिः, "एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्यविभक्तान्यरूपोपग्राहिता विवर्तः, स्वप्नविषयप्रतिभासवत्" इति एकस्यान्यरूपस्वीकारं स्वरूपविनाशेन प्रतिपद्यते प्रतीत्यसमुत्पादवादिन इति तद्व्यवच्छेदार्थं तत्त्वादप्रच्युतस्येति विशेषणम् । एवमपि कारणस्य स्वात्मसमवायि यत् कार्यं तस्यापि परिग्रहः स्यादिति विभक्तग्रहणम् । विभक्तस्य नानाभूतस्येत्यर्थः । तथापि तत्त्वादप्रच्युतस्य धर्मान्तरतिरोधानाविर्भावाभ्यां विभक्तान्यरूपो यः परिणामस्तस्यापि प्रसङ्ग इत्यस्य इत्यसत्यग्रहणम् । एवमपि तत्त्वतस्तत्त्वमधिजहतोऽन्यरूपेण वितथत्वात् समारोपवशेन पररूपावेशाद् गोत्वस्येव वाहीकार्थोपग्राह इति तद्व्यवच्छेदार्थमाह भेदानुकारेणेति ।

**शब्दोपग्राह्यतयेति** । शब्द उपग्राह्यः स्वीकर्तव्योऽस्य तदाकारस्यात्मनि व्यवहारावस्थायाः प्रकाशनात् । शब्दे तदुपग्राह्यत्वेन विवृतस्य तेन प्रतिपाद्यतयाऽलम्बनात् **शब्दोपग्राहितया** चेति शब्दमुपगृह्णाति तदाकारमात्मनि स्वीकरोति । शब्दः उपग्राही वाचकत्वेन वास्येति ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ।। इति ।

अतः क्रमेण तावदेवं बोध्यसे शब्दाख्यविशेषणानुवेधविशेषाननुभवात् सर्वं निर्विकल्पकमिन्द्रियजमविकल्पकं वा ज्ञानं शब्दविशिष्टमर्थमवद्योतयति । गौः शुक्लो गच्छतीति जातिगुणक्रियावच्छिन्नविषयावभासिनि प्रत्यये शब्दविशिष्ट एवार्थः प्रस्फुरतीति बुद्ध्यस्व, एवं चेद् बोद्धुमवतीर्णोऽसि शब्दाख्यविशेषणानुरक्तस्य तस्य विशेष्यस्य स्वरूपं पृष्टः शब्देनैव दर्शयसि शब्दापरित्यागलब्धप्रकाशस्वरूपयैव वा अनुभूत्यानुभवसीति सोऽपि विशेष्यः शब्दरूप एवेति जानीहि । तदेवं शब्द एवार्थोपारूढः प्रतिभातीति व्यवतिष्ठते । इत्थमियन्तमध्वानं चेत् प्राप्तोऽसि तदधुना यदुपारूढः शब्दः प्रकाशते तस्य पृथक् प्रदर्शयितुमनुभवितुञ्चाशक्यत्वाच्छब्द एव तथा प्रतिभातीति शब्दविवर्त एवायमर्थो नान्यः कश्चिदिति प्रतिपत्तुमर्हसि । यथा चायमिन्द्रियजेषु प्रतिभासेषु प्रक्रमस्तथा शाब्देष्वपि प्रत्ययेषु शब्दविशिष्टो वार्थः प्रतिभाति शब्दो वार्थारूढः । शब्द एवार्थरूपेण विवर्तत इति गृह्यताम्। अतश्च शब्दब्रह्मेदमेकमविद्योपाधिदर्शितविचित्रभेदमविद्योपरमे यथावस्थितरूपं प्रकाशत इति युक्तम् ।

---

**अविद्योपाधिदर्शितविचित्रभेदमिति** । तदाह,

यः सर्वपरिकल्पानामभावेऽप्यनवस्थितः ।
तर्कागमानुमानेन बहुधा परिकल्पितः ।। १ ।

व्यतीतो भेदसंसर्गौ भावाभावौ क्रमाक्रमौ ।
सत्यानृते च विश्वात्मा प्रविवेकात् प्रकाशते ।। २ ।

अन्तर्यामी स भूतानामाराद् दूरे च दृश्यते ।
सोऽत्यन्तमुक्तो मोक्षाय मुमुक्षुभिरुपास्यते ।। ३ ।

प्रकृततित्वमपि प्राप्तान् विकारानाकरोति यः ।
वसुधामेव धर्मान्ते महतो मेघसम्प्लवात् ।। ४ ।

तस्यैकमपि चैतन्यं बहुधा प्रविभज्यते ।
अङ्गाराङ्कितमुत्पाते वारिराशेरिवोदकम् ।। ५ ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

तत्राभिधीयते, न खलु प्रकारत्रयमपीदमुपपद्यते । पदपदार्थसम्बन्धव्युत्पत्तिविरहिणामनवाप्तशब्दयोजनावैरूप्यसारूप्यमात्रप्रतिशुद्धवस्तुग्रहणप्रवणेन्द्रियज - प्रत्ययदर्शनात्, वृद्धव्यवहारपरिचयाधिगतशब्दार्थसम्बन्धसंस्थाधियामपि शब्दस्मरणसंस्कारप्रबोधहेतुभूतप्रथमोद्भूतविशुद्धवस्त्ववभासस्यापरिहार्यत्वात्। यत्र हि वस्तुनि निविशमानः शब्दः शब्दविद्व्यवहारेषु योऽवधृतस्तद्दर्शने तत् संस्कारप्रबोधात् स्मृतिपथमेति नान्यथेति, सामान्यशब्देष्वपि यत्, तत्, सत्, किमित्यादिषु विशेषशब्देष्विव सैव वार्ता तेषामपि व्युत्पत्त्युपयोगविरहे विविधवनविहारिविहङ्गकूजितादिव अर्थप्रतीतिहेतुत्वानुपपत्तेः । सविकल्पकदशायामपि न वाचकविशिष्टं वाच्यं मेचकगुणखचितमिव कुवलयमवलोकयतीति विस्तरतः प्रत्यक्षलक्षणे परीक्षितमेतत् । आह च,

न शब्दाभेदरूपेण बुद्धिरर्थेषु जायते ।
प्राक् शब्दाद् यादृशी बुद्धिः शब्दादपि हि तादृशी ।। इति ।

संज्ञित्वमात्रमधिकमधुना ध्वनिसन्निधाने बुद्धिमधिरोहति, न तद्विशिष्टोऽर्थः, तस्य हि श्रोत्रेण नेत्रेणोभाभ्यां न, केवलेन मनसा वा ग्रहणमुपपद्यते, अतिप्रसङ्गात् ।

**नापि शब्दाध्यासवादः**

शब्दो ह्यनेकधर्मके धर्मिण्येकतरधर्मावधारणाभ्युपायो भवति, न तत्रात्मानमारोपयति । न हि दीपेन्द्रियप्रभृतयः प्रतीत्युपायास्तदुपेये रूपादावात्मानमारोपयन्ति, अत एव तदुपायत्वभ्रमकृतस्तदभेदवादोऽपि न युक्तः ।

---

तस्मादाकृतिगोत्रस्थाद् व्यक्तिग्रामा विकारिणः ।
मारुतादिव जायन्ते वृष्टिमन्तो बलाहकाः ।। ६ ।

यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
सङ्कीर्णमिव मात्राभिश्चित्राभिः प्रतिपद्यते ।। ७ ।

तथेदममलं ब्रह्म निर्विकारमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपं प्रतीयते ।। ८ । इत्यादि ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

न ह्युपायादभिन्नत्वं तदुपेयस्य युज्यते ।
रूपस्य न ह्यभिन्नत्वं दीपाद् वा चक्षुषोऽपि वा ।।

अपि च, यदि शब्दादभिन्नोऽर्थः प्रतिभात्येव कोऽध्यासार्थः अध्यासभ्रमस्तु वैयाकरणानामेकाकारनिर्देशदोषनिर्मितः, यथा गौरित्येष हि निर्देशो वाच्यतद्बुद्धिवाचिनाम् । कस्त्वया दृष्टोऽर्थ इति पृष्टो गौरिति, कीदृशं ते ज्ञानमुत्पन्नं गौरिति, कीदृशं शब्दं प्रयुक्तवानसि गौरिति, तत एषा भ्रान्तिः । वस्तुतस्तु विविक्ता एवैते शब्दज्ञानार्थाः । तदुक्तम्,

गवि सास्नादिमद्रूपा गादिरूपाभिधायके ।
निराकारोभयज्ञाने संवित्तिः परमार्थतः ।। इति ।

एवमिन्द्रियजेष्विव शाब्देष्विपि प्रत्ययेषु न शब्दः स्वरूपमध्यस्यतीति युक्तम्, यदि च शब्दः स्वरूपेणार्थं प्रतिपादयति तदा अक्षशब्दस्यैक्याद् देवनविभीतकरथाक्षेषु तुल्या प्रतीतिः स्यात्, न चाक्षशब्दा भिन्ना इति वक्तव्यं रूपप्रत्यभिज्ञानपायात्, तदुच्चारणे चार्थत्रय्यां संशयदर्शनात्, 'भवति'शब्दयोश्च सुप्तिङन्तयोस्तुल्यरूपत्वादध्यासपक्षे तुल्यार्थप्रतीतिहेतुत्वं प्राप्नोति, तथा च सिद्धसाध्यबुद्धिः संवेद्यमानापि निह्नूयेत । एवम् अगादिति, अश्व इति, अजापय इत्यादावपि द्रष्टव्यम् ।

शब्दस्य सिद्धरूपत्वात् तदध्यासेनार्थबुद्धाविष्यमणायां 'यजेत दद्याज्जुहुयाद्'इत्यादौ न क्वचित् सा बुद्धिर्भवेत्, सिद्धाध्यासेन साध्यबुद्धेरननुरूपत्वात् । जातिगुणक्रियाशब्दाश्च 'गौः शुक्लो गच्छति'इत्यादयः केन कारणेन नियतमध्यासमनुरुन्धत इति नावगच्छामः, शब्दस्यार्थानपेक्षनिसर्गसिद्धवैश्वरूप्यकल्पनाबीजाभावात् । प्रतिनियतशब्दवृत्तेश्च कस्यचिल्लक्षणोऽनुपलक्षणात् ।

---

**वाच्यतद्बुद्धिवाचिनामिति** वाच्यं च तद्बुद्धिश्च वाची चेति वाच्यतद्बुद्धिवाचिनः । अस्य पूर्वमर्धम्,

शब्देनैव हि निर्देशो गृहीतेऽर्थेऽवकल्पते ।

**गवि सास्नादिमद्रूपेति** । सास्नादिमदाकारा । अर्थेन स्वप्रकटनायै गृहीतत्वाद् बुद्धेस्तदाकारत्वमुच्यते, न पुनर्वस्तुतः, निराकारज्ञानवादित्वाद् मीमांसकस्य ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

वृक्षपक्षशब्दयोश्च घटपटशब्दयोरिव स्वरूपभेदाविशेषादर्थानपेक्षित्वाच्च विशेषणविशेष्यभावसामानाधिकरण्ये शब्दाध्यासवादिनो न भवेताम्। न ह्येकत्र वस्तुनि वाच्ये क्वचिदनयोः शब्दयोर्वृत्तिः।

एतेन नीलोत्पलमपि प्रत्याख्यातम्। तत्रैतत्स्यात्, न नीलगुणविशेषितमुत्पलं नाम किञ्चिदस्ति विशेष्यम्, अपि तु तन्निरस्तावयवार्थम् अश्वकर्णादिवदर्थान्तरमेवेदम्, व्युत्पत्तिप्रकारमात्रन्तु विशेषणविशेष्यभाववर्णनमिति। तदेतदसमीचीनम्, अनुभूयमानावयवार्थप्रतीतिनिह्नवनिमित्तानुपलम्भात्। अश्वकर्णादौ हि युक्तमर्थान्तरत्वम्, तत्र हि नाश्वार्थो न कर्णार्थः। निरवयववाक्यार्थवादश्च प्रागेव विस्तरेण निरस्त इत्यलं पुनरुक्तालापेन।

अथ शब्दाद्वयाभ्यासनिबन्धनमेव सामानाधिकरण्यं वृक्षो वृक्ष इत्युच्यते, तदपि न चारु, वृक्षस्तरुरिति पर्याययोरपि तत्सम्भवे सति सामानाधिकरण्यप्रसङ्गात्।

अपि च, पर्यायेषु 'हस्तः करः पाणिः' इत्यादिषु शब्दरूपभेदाध्यासपक्षे अर्थबुद्धिभेदः प्राप्नोति, न चासावस्तीति नाध्यासः।

किञ्च सम्बन्धग्रहणनिरपेक्षोऽपि शब्दः स्वसामर्थ्यमनुरुध्यमानः स्वाध्यासेन बुद्धिं विदध्यात्, तदपेक्षायां कस्य केन सम्बन्ध इति न बुध्यामहे, शब्दादर्थस्य पृथग्व्यवस्थितात्मनस्तन्मते दुर्लभत्वात्। शब्दव्यतिरिक्तार्थोपगमे वा किमनेन शब्दाध्याससमर्थनाडम्बरेण? विरम्यतामतो मृगतृष्णानुसरणरणरणकात्।

अपि चाध्यासः क्वचित् सादृश्याद् भवति शुक्ताविव रजतस्य, क्वचिदनुरागाद् भवति लाक्षया इव स्फटिके। शब्दार्थयोर्मूर्त्तामूर्त्ततयातिदूरभिन्नस्वरूपयोः सादृश्यं तावदनुपपन्नम्, अनुरागोऽपि तत एव दुर्घटः पृथग्देशत्वाद् भिन्नेन्द्रियग्राह्यत्वाच्च।

प्रतिबिम्बवर्णनमपि न सुन्दरम्। दूरदेशत्वेन शब्दार्थयोः प्राप्तेरभावात्, अप्राप्तयोश्च प्रतिबिम्बोदये द्वारकोद्याननिवासिवासुदेवसुन्दरीवदनतामरसानि सागरतरङ्गपवनपरिचयचलदलकलतिकालाञ्छितानि स्वच्छेषु ज्योत्स्नावदातद्युतिषु तुषारगिरिगह्वरगततुहिनशिलाकर्पूरदर्पणेषु प्रतिबिम्बितानि दृश्येरन्।



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अथ सर्वगतत्वेन शब्दानामर्थदेशे प्राप्तिरभिधीयते, तर्हि सकलशब्दसार्थसाधारण्यादत्यन्तमध्याससाङ्कर्यमनवधार्यमाणविशेषनियमकारणमापद्यत इत्यलमतिप्रसङ्गेन । सर्वथा न सम्बद्धः शब्दाध्यासवादः ।

**न च शब्दविवर्त्तः**

विवर्तवादोऽपि न समञ्जसः । तथा हि विवर्ते क्षीरमिव दधिरूपेण परिणामित्वेन विकारितया वा क्षीरादेरिवानित्यत्वप्रसङ्गात् । तथाभावेऽपि च नाद्वैतसिद्धिः, दध्न इव क्षीरविकारस्य शब्दविकारस्यार्थस्य ततोऽन्यत्वात्; अन्यत्वाच्च बाधकारणकालुष्याद्युपप्लवविरहितकिसलयप्रतीतिसमर्पितभेदत्वात् । अथार्थप्रतिभासमसत्यमपीन्द्रजालवदुपदर्शयति शब्द इत्ययं विवर्तार्थः, सोऽपि न युक्तः, बाह्यस्य वस्तुनः पदाभिधेयस्य जातिव्यक्त्यादेः, वाक्यवाच्यस्यापि भावनादेः पूर्वप्रसाधितत्वात् । अवयव्यादेश्चादूर एवाग्रे समर्थितत्वात् । न चेन्द्रजालमायादिवदयथार्थतायामिह किमपि कारणमुत्पश्यामः ।

अथार्थरूपेण शब्दः शुक्तिरिव रजताकारतयावभासत इतीयं विवर्तवाचोयुक्तिः, इयमपि न साधीयसी । शुक्तिका हि रजतवत् प्रकाशत इति शक्यं वक्तुं शुक्तेराकारसारूप्येण तथावभाससम्भवात् । इह तु शब्दार्थयोरत्यन्तविसदृशवपुषोराकारसमारोपकारणानवधारणात् कथमितररूपणेतरस्यावभासः । शुक्तिकारजतादिप्रतीतिषु च बाधकवशात् तथात्वमवगतम्, इह तु धर्ममजहत् सत्यामसत्यां वा अर्थबुद्धिमादधाति शब्द इत्ययं विवर्तार्थः । एषोऽपि सम्प्रत्येव प्रतिक्षिप्तः, शब्दानुवेधविरहिणीनां प्राचुर्येण प्रतिपत्तीनां प्रदर्शितत्वात् । न चान्यः कश्चिद् विपश्चिच्चेतसि विपरिवर्तते विवर्तप्रकार इत्यवाचकमुच्यते 'विवर्ततेऽर्थभावेन' इति ।

अथ शब्दब्रह्मैव सृजति जगन्तीत्ययं विवर्तप्रकार उच्यते, सोऽपि न सम्यक्, अचेतनत्वेन शब्दस्य ईश्वरस्येव स्रष्टृत्वानुपपत्तेः । न च परमाणुवदस्य कारणत्वम्, अवयवसमवायित्वेन पृथिव्यादेः कार्यस्य ग्रहणात् ।

अथ 'विज्ञानमानन्दं ब्रह्म' इत्यागमवचनमनुसरता विभुत्वमिव

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

चेतनत्वमपि शब्दब्रह्मणो वर्ण्यते, तर्हीश्वरस्यैव शब्दब्रह्मेति नाम कृतं स्यात् । यदप्युच्यते,

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।। इति ।

तदपि ब्रह्मसुभिक्षमत्यन्तमलौकिकमेकतरस्य ब्रह्मणः काल्पनिकत्वात् । अकाल्पनिकत्वे वा कथमद्वैतवादः ? तस्मात् कृतमनेन शब्दब्रह्मणा, स्वस्ति परस्मै ब्रह्मणे भूयात्, अविद्यामायाविनिर्मितविविधप्रथनकल्पश्च सत्ताद्वैत-दूषणावसर एव निवारित इति शब्दाद्वैतमपि तद्वदसमञ्जसमसिद्धम् ।

एतेन परमात्मोपादानत्वमपि प्रत्युक्तम्, परमात्मनो निसर्गनिर्मलस्य एवम्प्रायकलुषविकारकारणत्वानुपपत्तेः । असत्यमेव विकारजातमविद्यातः परमात्मनि विभातीत्येतदपि दूषितम् । अतः सर्वथा नाद्वैतपक्षः कश्चिदनवद्यः ।

अथ सर्वप्राणिनामेक एवात्मा नाना नात्मान इतीदृशमद्वैतमुच्यते, तदप्यप्रमाणकम्, एकस्मिन् सुखिते न सर्वे सुखिनः, एकस्मिन् दुःखिते वा न सर्वे दुःखिता इति व्यवस्थादर्शनात् । आत्मपरव्यवहारस्य च सर्वजनप्रतीतिसिद्धस्य दुरपह्नवत्वात् । अन्यदृष्टे च सुखसाधने वस्तुनि स्मरणानुसन्धानपूर्वकेच्छाद्वेषादि-कार्यजातस्यान्यत्रानुपलम्भात् । एकस्मिंश्च वीतरागे मोक्षमासादितवति

---

**द्वे ब्रह्मणी वेदितव्ये** इति । वैखर्याद्यवस्थात्रयेण विवृतं शब्दब्रह्म, परन्तु अविवृता-वस्थं सकलपरिकल्पनातीतम् ।

**अविद्यामायाविनिर्मितेति** । अविद्यैव मायेन्द्रजालप्रख्या ।

**एतेन परमात्मोपादानत्वमपीति** पूर्वं त्वभेदादर्शनमविद्येत्युक्तम्, अधुना तु भेदानां परमात्मैवोपादानकारणमित्यभिधीयते । मा भूद्भेदप्रपञ्चस्य मायाप्रदर्शितत्वमसत एव । तस्मात् परमात्मैव तथाविधस्य भेदप्रपञ्चस्योपादानमिति । पूर्वत्र केवलाविद्यावशा-दभेदाग्रह इह तु परिणतया अविद्यया चेति । सर्वत्र चैतन्याभिव्यक्तेरचेतनाच्चैतन्योत्पत्तेर-योगाद् व्यापकत्वात् तस्यैव कारणत्वं युक्तम् । प्रकाशात्मिकयैव शक्त्या पदार्थानाम-चेतनानां सत्त्वव्यवस्थापनात् तच्छक्त्या अविनिर्भाग इति ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

भावाद् विपरीतोऽतद्धर्मभावी साधनरहितो यो दृष्टान्तः स वैधर्म्यदृष्टान्तः। पूर्ववद्वचसः कर्मतामापद्यमानो वैधर्म्योदाहरणं भवति। विपरीतमित्युदाहरणापेक्षया नपुंसकलिङ्गनिर्देशः।

किमर्थं पुनः साध्याभावात् साधनाभावो वैधर्म्यदृष्टान्तः स वर्ण्यते, न पुनः साधर्म्यदृष्टान्तस्थित्या साधनाभावादेव साध्यभाव इति

उक्तमत्र,

व्याप्यव्यापकभावो यः साध्यसाधनधर्मयोः।
स एव वैपरीत्येन मन्तव्यस्तदभावयोः॥ इति।

किं कारणम् ? साधनधर्मे हि धूमे साध्यधर्मेणाग्निना व्याप्तेनाग्निस्तत्र निवेशमलभमानोऽनन्यत्रावकाशत्वाद् धूम एव निवेशितः, एवं साध्यधर्माभावेऽनग्नौ साधनधर्माभावेनाधूमेन व्याप्ते सति धूमस्तत्र लब्धावकाशोऽनन्यगतित्वादग्नावेव निविशत इति। यदि तु साधर्म्यदृष्टान्तवत् तथैव व्याप्यव्यापकभावः ख्याप्यते साधनाभावे साध्यं नास्तीति तदा धूमाभावेनानग्निना व्याप्तेनाग्निस्तत्रालब्धनिवेशो धूममवलम्बेतेति स्यात्, न चैतन्निर्वहत्यधूमेऽपि वह्निदर्शनादित्येवं सपक्षैकदेशवृत्तेर्हेतुत्वमपि प्रसिद्धं हीयते व्याप्तिवैधुर्यादिति। अपि च धूमाभावेनाग्न्यभावे व्याप्ते कथ्यमाने सत्यधूमो नियमितो भवत्यनग्नि मा हासीदित्यग्निस्त्वनियमितः स्वातन्त्र्यादधूममपि स्पृशेदिति व्यभिचारात् प्रतिबन्धो विप्लवेत। तदुक्तम् 'यदा तु साध्याभावेन हेत्वभावो विरुध्यते साधनं ख्यापितं भवेत्, साध्यं पुनः स्वतन्त्रत्वाद्धेतुभावेऽपि सम्भवेत्' इति। तस्माद् यत्रापि समव्याप्तिकौ साध्यसाधनधर्माविति सपक्षैकदेशवृत्तित्वेनाहेतुत्वमाशङ्क्यते तत्रापि साधनधर्मस्य विपक्षाद् व्यावृत्तिमभिधित्सता साध्याभावे साधनाभावो दर्शयितव्यः, यत्रानित्यत्वं नास्ति तत्राकृतकत्वमपि नास्ति यथाकाश इति। यो ह्यविद्यमानविपक्षो हेतुः सोऽपि सुतरां ततो व्यावृत्तो भवति तदभावात् तत्रावृत्तेरिति। अतश्च सर्वपदार्थानित्यत्वं नास्ति, तत्र कार्यत्ववाद्येवमपि वैधर्म्यदृष्टान्तमप्रदर्शयन्न वार्यते यत्र नित्यत्वं नास्ति तत्र

---

सपक्षैकदेशवृत्तेरिति। धूमो हि हेतुः सपक्षैकदेशवृत्तिः, अग्निमन्तो हि प्रदेशाः



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

कार्यत्वमपि नास्ति यथा शशविषाणादाविति । ते एते साधर्म्यवैधर्म्योदाहरणे अन्वयव्यतिरेकवति हेतावुभे अपि सम्भवन्ती विकल्पेन प्रयोक्तव्ये, एतेनैव व्याप्तेः प्रदर्शनात् किमन्येन कृत्यम् ।

केचित्तु व्याप्तिसौष्ठवप्रदर्शनाय द्वयोरपि प्रयोगमिच्छन्ति । भवतु मा वा भून्नेदं महद् विमर्दस्थानम् । ननु हेतूदाहरणाधिकमिति निग्रहस्थानमिदमादिष्टम् । समानजातीयाभिप्रायं तद् भविष्यति, साधर्म्यदृष्टान्तानेकत्वे वा तन्निग्रहस्थानमित्यास्तामेतत् । इत्थं साधर्म्यवैधर्म्यदृष्टान्तरूपे व्युत्पादिते बलात् तल्लक्षणरहिता दृष्टान्ताभासा भवन्ति । तत्र साध्यविकलः साधनविकल उभयविकल इति वस्तुदोषकृतास्त्रयः साधर्म्यदृष्टान्ताभासाः, अनन्वयो विपरीतान्वय इति द्वौ वचनदोषकृतौ । यथा नित्यः शब्दः अमूर्तत्वादित्यत्र बुद्धिवदिति साध्यविकलो दृष्टान्तः, परमाणुवदिति साधनविकलः, घटवदित्युभयविकलः । व्योम्नि नित्यत्वाद् मूर्तत्वं विद्यते इत्यनन्वयः, यदमूर्तं तन्नित्यमिति वक्तव्ये यन्नित्यं तदमूर्तमिति विपरीतान्वय इति । वैधर्म्यदृष्टान्ताभासा अपि पञ्चैव साध्याव्यावृत्तः साधनाव्यावृत्तः उभयाव्यावृत्त इति वस्तुदोषास्त्रयः । अव्यतिरेको विपरीतव्यतिरेक इति वचनदोषौ द्वौ । यथा तत्रैव हेतौ यत्र नित्यत्वं नास्ति तत्र मूर्तत्वमपि नास्ति यथा परमाणुष्विति साध्याव्यावृत्तः, बुद्धाविति साधनाव्यावृत्तः, यथा आकाश इत्युभयाव्यावृत्तः । नित्यत्वामूर्तत्वे घटे न विद्येते इत्यव्यतिरेकः, यत्र नित्यत्वमपि नास्ति तत्रामूर्तत्वमपि नास्ति इति

---

सपक्षाः, न च सर्वेष्वसावस्ति, शुष्केन्धनप्रभवेऽग्नावसम्भवात् । **व्योम्नि नित्यत्वाद् मूर्तत्वं विद्यते इत्यनन्वय** इति । एवं ह्युच्यमाने प्रकृतेन हेतुवचनेन साध्यसम्बन्धेनान्वयो न प्रदर्शितो भवति । **यन्नित्यं तदमूर्तमिति विपरीतान्वय** इति । व्याप्यस्य प्राथम्येन यच्छब्देन च निर्देशः कर्तुमुचितो व्यापकस्य तु पश्चाद् निर्देशस्तच्छब्देनैव कार्यः, यत्र धूमस्तत्राग्निरितिवत् । तदुक्तम्,

उद्देश्यो व्याप्यते धर्मो व्यापकश्चेतरो मतः ।
यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ॥
तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ।

**दोषश्च स्फुट एव मनसो नित्यस्याप्यमूर्तत्वाभावात् ।**

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

वक्तव्ये यत्रामूर्तत्वं नास्ति तत्र नित्यत्वमपि नास्तीति विपरीतव्यतिरेक इति । एते च वस्तुवृत्तेन हेतुदोषा एव तदनुविधायित्वात्, अत एव हेत्वाभासवत् सूत्रकृता नोपदिष्टाः, अस्माभिस्तु शिष्यहिताय प्रदर्शिता एव ।

**उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ।।**

उदाहरणमात्मलाभेऽपेक्षत इत्युदाहरणापेक्षः पक्षधर्मोपसंहार उपनयः । द्विविधश्चासौ तथेति न तथेति वा, उदाहरणद्वैविध्यात् । तत्र साधर्म्योदाहरणापेक्षस्तथेत्युपनयो यत् कृतकं तदनित्यं दृष्टं यथा आकाशः । न च न तथा कृतकः शब्द इति, अत्रापि निषेधद्वययोगाद् विधिरेव गम्यते ।

ननु साध्यस्येत्यवाचकः सूत्रावयवः । पक्षधर्मोपसंहारो ह्युपनयो न साध्योपसंहारः । साध्यो हि धर्मो धर्मी वा स्यान्न तयोरन्यतरस्याप्ययमुपसंहार इति ।

उच्यते, साध्यो धर्म्येव न धर्म इह विवक्षितः । तत्रायं हेतोरुपसंहारस्तथा च कृतकः शब्द इति । सेयं साध्यस्येति सप्तम्यर्थे षष्ठी मन्तव्या । साध्ये धर्मिणि हेतोरुपसंहार उपनय इति ।

नन्वाधारविवक्षायामिह प्राप्नोति सप्तमी ।
सम्बन्धमात्रे वाच्ये वा कथमाधारतोच्यते ।।
नैतत् सम्बन्धसामान्येऽप्युक्ते भवति धर्मिणा ।
योगो विशेषचिन्तायां तस्य त्वाधारता भवेत् ।।
विशेषेऽन्तर्निगूढे च प्रायः षष्ठी नियुज्यते ।
शेषो नामाविवक्षैव कारकाणामिति स्थितिः ।।
तथा च राज्ञः पुरुषो ब्राह्मणस्य कमण्डलुः ।
तरोः शाखेति सर्वत्र विशेषोऽन्तर्व्यवस्थितः ।।

---

**पक्षधर्मोपसंहारः** पक्षधर्मस्य हेतोरुपसंहारः 'तथा चायं कृतकः' इति ।

**नन्वाधारविवक्षायामिति । अथास्यानाश्वास इतिवत् । सम्बन्धमात्रापेक्षया षष्ठ्या निर्देशस्तथाप्याधाराधेयभाव एवासौ सम्बन्ध इति कुतो लभ्यत इति तदेवाह सम्बन्धमात्रे वाच्ये वेति । सर्वत्र विशेषोऽन्तर्व्यवस्थित इति । राजा पुरुषं बिभर्ति यतो राजपुरुष इति ।**

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अतश्च धर्माय जिज्ञाया धर्मजिज्ञासा, सा हि तस्य ज्ञातुमिच्छेतिवत् सम्बन्धमात्रसमर्पिकापि सेयं षष्ठी विशेषपर्यवसाना भविष्यतीति सूक्तं 'साध्यस्योपसंहारः' इति ।

**उपनयवैयर्थ्यशङ्का**

ननूपनयवचनमनर्थकम्, पक्षहेतुदृष्टान्तवचनैः किं न पर्याप्तं यदर्थमुपनयवचनमुच्चार्यते ? यदि धर्मिणि हेतोः सत्त्वसिद्धये तदभिधानं तदैष वृथैव श्रमः, पक्षधर्मवचनेनैव कृतकत्वादित्येवमादिना सिद्धत्वात् । अथ साध्यदृष्टान्तधर्मिणोः साध्यापादनाय तदुच्चारणम्, तदपि न, चतुरस्रम् उदाहरणसाधर्म्यादित्यनेनैव गतार्थत्वात् । उदाहरणसाधर्म्यवचनं हि हेतुवचनमेव भवेत् । अथ स्वप्रतिपत्तौ तदर्थदर्शनात् परं प्रति तद्वचनम्, तत्रापि परामर्शज्ञाने विवदन्ते । अपि च स्वयं दधिभक्षणसमनन्तरं यदि कदाचिदनुमेयमिति उपजायते तत् किं परस्मै तदुपदिश्यताम् । योऽप्ययं प्रतिज्ञाहेतूदाहरणोपनयनिगमनप्रयोगक्रम आश्रीयते सोऽपि स्वप्रक्रियानुरागनिर्मित एव न वस्तुबलप्रवृत्तः । तथा हि यद् यत् कृतकं तत् तदनित्यं दृष्टं कृतकश्च शब्द इतीयतो वचनात् को नाम शब्दानित्यतां नावगच्छेत् ? वामे चात्र सत्यव्रतधनः प्रमाणम् 'डिण्डिकरागं परित्यज्याक्षिणी निमील्य चिन्तय तावत् किमियतार्थं बुद्ध्यसे न वा । तस्मात् स्वप्रक्रियापक्षपातमपास्य पञ्चावयवम् एवंक्रमकं वाक्यं प्रयुङ्क्ष्व' इति ।

**उपनयव्यर्थतोद्धारः**

अत्रोच्यते, इदं तावद् भवान् पृष्टो व्याचष्टाम्, किं स्वप्रतिपत्तिमनुसरन्तः परप्रतिपादनाय वाक्यरचनां कुर्म उत परहृदयानुवर्तनेनेति । तत्र पराभिप्रायस्य वैचित्र्यात् परोक्षत्वाच्च दुरवगमत्वेन न विद्मः किं विदध्महे ।

---

**अतश्च धर्माय जिज्ञासेति** । यथात्र सामान्येन भाष्यकृता 'सा हि तस्य ज्ञातुमिच्छा' इत्यनेन षष्ठीसमासनिर्देशाय प्रदर्शिता, 'धर्माय जिज्ञासा' इति त्वनेन तादर्थ्याख्यसम्बन्धविशेषपर्यवसायित्वं प्रतिपादितम् । तदुक्तम् 'सा हि तस्य' इत्यनेनोक्तधर्मस्येत्येष विग्रहः, 'धर्माय' इति तु पूर्वोक्तमस्यैवार्थोपवर्णनमिति, तद्वदिह ।

**डिण्डिकरागं परित्यज्येति** । क्षपणकाभिनिवेशं त्यक्त्वेत्यर्थः ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

किं भुवमुत्क्षिपामः किमरत्निना परं पीडयाम उत हस्तसंज्ञया व्यवहरामः, आहो हेतुमात्रमेव केवलं प्रयुञ्ज्महे किं वा त्र्यवयवं वाक्यमभिदध्मः, उत पञ्चावयवादपि वाक्यादधिकमाख्यानकमस्मै वर्णयामः, इत्येवमनवस्थितत्वात् पराभिप्रायस्य स्वप्रतिपत्तिमेवानुसरता परः प्रत्याय्यः। तत्र स्वप्रतिपत्तौ पर्वतादिधर्मी प्रथमं दृष्ट इति स प्रतिज्ञया कथ्यते। ततो धूमादिलिङ्गमुपलब्धमिति हेतुवचनेन तदावेद्यते। ततो यत्र धूमस्तत्राग्निर्यथा महानस इति व्याप्तिस्मरणमभवदिति दृष्टान्तवचसा तदभिधीयते। ततस्तथा चायं धूम इति परामर्शज्ञानमुदपादीति तदुपनयवचनेन प्रतिपाद्यते। ततस्तस्मादत्राग्निरित्यनुमेयज्ञानमुपजायत इति निगमनेन तदुच्यते। ततः परं प्रति पर्यवसानात् किमन्यदुपदिश्यतामिति, न च दधिभक्षणसदृशमतोऽन्यतममपि भवितुमर्हत्यनुमेयप्रतिपत्तावुपादेयत्वात्।

येषामपि मते परामर्शज्ञानं नास्ति तैरप्युपनयवचनमवश्यमेवापरिहार्यमनुमेयप्रतिपत्तये, दृष्टान्ते दर्शितशक्तिरेव हेतुः प्रभवति नान्यथेति। अतो यद्यपि पक्षधर्मवचनेन हेतुसम्बन्धमात्रमुपपादितम्, तथाप्यत्र दृष्टान्तदर्शितशक्तिधर्मः स तस्मिन् धर्मिणि तथाविधो हेतुः स्यात्। न वा इत्यसिद्धाशङ्काशमनमुपनयवचनमन्तरेण न भवत्येवेत्यवश्यं प्रयोक्तव्यं तदिति। स्वप्रतीत्यनुसरणेन च वाक्यरचनायाः स्थितत्वात् क्रमोऽपि यथोक्त उपयुज्यते। अत एव च यत् कृतकं तदनित्यं दृष्टमित्यभिधानमनुपपन्नम्, अनवगते धर्मिणि तद्वर्तिनि च हेतौ प्रथममेव व्याप्तिस्मरणासम्भवेन तद्वचनायोगात्। तदिदमवयवविपर्यासवचनमप्राप्तकालनिग्रहस्थानमुपदेक्ष्यामः। अपि च 'यत् कृतकं तदनित्यं दृष्टं कृतकश्च शब्द इत्येतावदेव प्रयोक्तव्यम्' इति वदता भवता कृतकश्च शब्द इत्येतावदेव प्रयोक्तव्यमिति इतीदमुपनयवचनमनुज्ञातम्, कृतकत्वादिति पक्षधर्मवचनन्तु निह्नुतम्। कृतकश्च शब्द इत्येतदेव हेतुवचनमिति चेत्, न, प्रयोजकस्य पञ्चम्यादिनिर्देशार्हत्वादिति यत्किंचिदेतत्। यदप्युच्यते विदुषां वाच्यो हेतुरेव

---

विदुषां वाच्यो हेतुरेवेति।

तद्भावहेतुभावौ हि दृष्टान्ते तदवेदिनः।
ख्याप्येते विदुषां वाच्यो हेतुरेव हि केवलः॥

केवल इति, तदप्यचारु, विद्वद्भिर्विद्वत्त्वादेव हेतोरपि प्रज्ञानात्, अपूर्वा इमे विद्वांसो ये प्रतिज्ञावयवचतुष्टयस्यार्थं जानन्ति हेतुवचनस्य न विदन्तीति । तस्मात् पराशयस्य सर्वथा दुर्बोधत्वात् पूर्वोक्तेनैव क्रमेण स्वानुभवसाक्षिकेण वाक्यरचनां कृत्वा परः प्रत्याय्य इति ।

**निगमनलक्षणम्**

**हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् ।।**

हेतुर्धर्मिणि निर्ज्ञातशक्तिः साध्ये धर्मिण्यपदिश्यतेऽनेनेति हेत्वपदेश उपनयः, तस्माद् हेत्वपदेशात् प्रवृत्तं प्रतिज्ञायाः पुनर्वचनं निगमनम् । निगम्यन्तेऽनेन पूर्वोक्ता अवयवा एकत्र साध्येऽर्थे समर्थ्यन्ते नियोज्यन्ते इति निगमनम् । तस्मात् कृतकत्वादनित्यः शब्द इति तदिदं निगमनं साधर्म्य-वैधर्म्यभेदेन हेतोर्दृष्टान्तस्य च तदपेक्षिणश्च तथा न तथेत्युपनयस्य द्वैविध्येऽपि प्रतिज्ञावचनवत् तुल्यमेव भवति ।

**प्रतिज्ञावन्निगमनमपि व्यर्थमिति शङ्का**

ननु प्रतिज्ञावचनमेव तावदसाधनाङ्गवचनत्वादपार्थकम्, तस्या एव तु पुनर्वचनं निगमनमसाधनाङ्गवचनत्वादपार्थकम्, तस्या एव तु पुनर्वचनं निगमनमधुना सफलं भविष्यतीति केयं कथा, प्रतिज्ञायाः पुनर्वचनमिति च न वाचको ग्रन्थः, साध्यनिर्देशो हि प्रतिज्ञा सिद्धनिर्देशस्तु निगमनमिति । वाचके वा ग्रन्थे पौनरुक्त्यादेव निगमनस्य नैष्फल्यम् । स्वप्रतिपत्तौ च परामर्शज्ञानान्तरं साध्यावगतिरेव भवन्ती दृश्यन्ते, सा परस्याप्युपनयवचन-श्रवणसमनन्तरमुपजायत एवेति किं तदुक्त्या प्रयोजनम् ?

**निगमनव्यर्थतानिरासः**

उच्यते, प्रतिज्ञायास्तावत् साफल्यं समर्थितमेव । तस्याश्चेदं पुनर्वचनं सिद्धसाध्यभेदे सत्यपि धर्मिधर्मनिर्देशमात्रमास्यादुच्यते, सिद्धसाध्यभेदादेव च न पौनरुक्त्यकृतमसाफल्यम्; स्वप्रतिपत्तिसमये च परामर्शज्ञानानन्तरं साध्यबुद्धिरुत्पन्ना, सा परस्मै कथ्यमाना न निष्प्रयोजना भवति ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

तस्माद्धेतोरिदं साध्यमहमज्ञासिषं यथा ।
तथा त्वमपि जानीहि मा स्म विघ्नोऽत्र ते भवेत् ।।

एवमुक्ते संशयानस्य संशयः शाम्यति विपर्यस्तमतेश्च विपर्ययः । तदर्थश्च परार्थानुमानोपन्यासश्रमः । तदिदं विपरीतप्रसङ्गनिषेधार्थं निगमनमाहुः ।

ये तु यथाश्रुतसाध्यनिर्देशात्मकप्रतिज्ञापुनर्वचनसमर्थनलोभादपि प्रतिज्ञायाः सिद्धिमबुध्यमाना असाधारणशङ्काव्यवच्छेदाय निगमनवचनमिच्छन्ति ते न सम्यगभ्ययुः । असाधारणशङ्कायाः दृष्टान्तवचनेनैव निरस्तत्वात् । विशेषस्य हि हेतुत्वशङ्कायामसाधारणशङ्का स्याद् यत् कृतकं तदनित्यमिति । दृष्टान्तवचसा सामान्यस्य हेतुत्वे कथिते कथमसाधारणत्वमाशङ्क्येत ? यदि पुनरुपनयवचनेन साध्ये धर्मिणि हेतोरुपसंहारादसाधारणत्वमाशङ्क्येत तत् पुनर्दृष्टान्तधर्मिवृत्तित्वमस्य दर्शयितव्यम् । तस्मिन् दर्शिते पुनस्तद्वृत्तित्वाद्धर्मिण्यसिद्धत्वमाशङ्कनीयं पुनस्तद्व्यावृत्तये धर्मिणि हेतोरुपसंहारो विधेय इत्येवमसाधारणाशङ्काव्युदासाय प्रयोगः किन्तु पूर्वरीत्यैवेति । तस्माद् विवक्षितेऽर्थे तथोदिते क्रमनिवेशिनोऽवयवान् एकत्र सङ्घटयितुं निगमनवचनं प्रयोक्तव्यम् ।

### अवयवेषु प्रमाणसंप्लववर्णनम्

त इमे प्रतिज्ञादयो निगमनपर्यन्ताः पञ्चावयवा यथासम्भवमागमादिप्रमाणानुगृहीताः परस्परानुषक्ताश्च स्वार्थं साधयन्ति । तत्र मुख्यया वृत्त्या प्रतिपाद्येनानुमानेनैव सर्वेऽवयवा अनुगृह्यन्ते प्रपञ्चाय तु प्रमाणान्तरानुग्रह एषामुच्यते । प्रतिज्ञायास्तावदागमोऽनुग्राहक उपेयते उपदेशस्वभावत्वात् । अनित्यः शब्द इत्युक्त्वा त्वेवंविधे विषये ऋषिवदस्वतन्त्रत्वादनुमानमुपदिशन्ति । प्रतिज्ञावचनन्तु तच्छायानुपातित्वाच्छब्दप्रामाण्यसिद्ध्यर्थे वा शास्त्रे

---

**प्रतिज्ञायास्तावदागमोऽनुग्राहक उपयेत** इति । सर्वा एव हि प्रतिज्ञाः प्रथममुच्चरन्त्य आगमवत् प्रतिभान्तीति तत्तुल्यविषया एव भवन्त्यतस्तेनानुगृह्यन्ते । आगमवत् प्रतिभानेन तद्विषयोपादेयतासंभवादागमानुग्रहः । यद्येवमागमवत् प्रतिभानात् प्रतिज्ञायाः

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

तत्प्रतिज्ञायाः शब्दविषयत्वादागमानुगृहीतमुच्यते। हेतुवचनमनुमानेनानुगृह्यते। उदाहरणन्तु प्रत्यक्षेण, तन्मूलत्वाद्व्याप्तिपरिच्छेदस्य। यथा गौस्तथा गवय इति च यथा घटस्तथा शब्द इत्यनया च्छाययोपमानकरणभूतवनेचरादिवचनसदृशत्वादुपमानमुपनयस्यानुग्राहकमभिधीयते। निगमनस्य तु सर्वावयवानामेकत्र नियोजनार्थत्वात् सर्वप्रमाणानुग्राह्यतैवेतरेतरानुषक्तत्वात्, प्रतिज्ञां विना निराश्रयो हेतुर्भवेदिति सा पूर्वं प्रयोक्तव्या अनित्यः शब्द इति। ततो हेतुं परो जिज्ञासत इति हेतुवचनमुच्चार्यते कृतकत्वादिति। हेतौ श्रुते क्वास्य व्याप्तिरवधृतेति दर्शयितुमुदाहरणमुच्यते यत् कृतकं तदनित्यं दृष्टं यथा घट इति। एवमुक्ते किमीदृशो निर्ज्ञातशक्तिरेष हेतुः साध्यधर्मिणि भवेन्न वेत्यसिद्धताशङ्कामपाकर्तुमुपनयः प्रसज्यते। ततोऽमुना क्रमेण तथापि साध्यप्रतीतिर्भवत्विति सर्वावयवानेकत्र साध्येऽर्थे समर्थयितुं निगमनमभिधीयते। अन्यतममवयवमन्तरेण सकलमिदमननुषक्तार्थंवाक्यं स्यादिति पञ्चावयवमेव यथोपदिष्टक्रमकं वाक्यं प्रयोक्तव्यम्।

इत्यारब्धोपकारास्तदनुगुणफलैरागमादिप्रमाणै-
रन्योऽन्यापेक्षिणोऽमी नियतमवयवाः साधयन्त्यर्थजातम्।
यश्चैतेषां प्रमेये वचसि च चतुरस्तस्य जातिप्रयोग-
प्रायैः शक्यो न पक्षः क्षपयितुमिति हि व्याहरद् वृत्तिकारः॥

**इति भट्टजयन्तस्य कृतौ न्यायमञ्जर्यां दशममाह्निकम्।**

---

कथं हेतुवचनमित्याह **उक्त्वा त्विति**। **तत्प्रतिज्ञायाः शब्दविषयत्वादिति** शब्दप्रमाणविषयत्वादिति। इयं तद्विषयभूतेन शब्देनानुगृह्यते, स शब्दो ह्यभिधेयत्वेनास्यां प्रतिज्ञायां स्थित इति। अयं तु सर्वप्रतिज्ञासम्भवी न भवत्यागमानुग्रह इति भाष्यकृन्मतं त्विदमपीति कृत्वा केवलं दर्शितम्। **हेतुवचनं त्वनुमानेनानुगृह्यते**। सत्यर्थंरूपेऽनुमाने तत्प्रतिपादकस्य वचनस्य सम्भवोऽनुग्रहः।

**इत्यारब्धोपकारा** इति प्राङ्नीत्या कृतानुग्रहाः। **तदनुगुणफलैरिति**। तथाहि प्रत्यक्षेण व्याप्तिग्रहे सत्युदाहरणं प्रवर्तते, इतरथा व्याप्त्यग्रहाद् उदाहरणाप्रवृत्तिरित्युदाहरणानुगुणं प्रत्यक्षफलं व्याप्तिपरिच्छेद इति। **इति हि व्याहरद् वृत्तिकार** इति।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

वृत्तिकारो भाष्यकारः। स ह्याह "न ह्येतस्यां हेतूदाहरणविशुद्धो साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जाति निग्रहस्थानबहुलत्वं प्रक्रमते। अव्यवस्थाप्य खलु धर्मयोः साध्यसाधनभावमुदाहरणे जातिवादो प्रत्यवतिष्ठते। व्यवस्थिते तु खलु धर्मयोः साध्यसाधनभावे दृष्टान्तस्थे गृह्यमाणे साधनभूतस्य हेतुत्वेनोपादानं न साधर्म्यमात्रस्य वैधर्म्यमात्रस्य वा इति"। अस्य पञ्चावयवस्य वाक्यस्य लौकिकत्वाद् नाग्निहोत्रादि-वाक्यवत् स्वतन्त्रप्रामाण्यमपि तु प्रमाणोपस्थापकत्वेन, तत् कस्यावयवस्य किंप्रमाणो-पस्थापकत्वमित्याशङ्कानिवारणाय प्रमाणानुग्रहचिन्ता भाष्यकृतामुना सूचितेति। भद्रम् ॥

भट्टश्रीशङ्करात्मजचक्रधरकृते
न्यायमञ्जरीग्रन्थिभङ्गे
दशममाह्निकम्





CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

# एकादशमाह्निकम्

## तर्कप्रकरणम्

### तर्कपरीक्षणम्

**अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ।।**

अविज्ञाततत्त्वेऽर्थे इति सामानाधिकरण्यनिर्देशादर्थ एवान्यपदार्थो न पुरुषः। पुरुषो हि षष्ठ्या निरदेक्ष्यत अविज्ञातं तत्त्वमस्येति। तत्त्वपदोपादानेन धर्मिणः सामान्यधर्ममात्रविशिष्टस्य विज्ञातत्वं सूचयति । कारणोपपत्तित इति संशयज्ञानोल्लिख्यमानपक्षद्वयान्यतरपक्षोत्थापनानुकूलकारणावलोकनं तत्त्वस्योत्थापकमाह । अत एवाविज्ञाततत्त्वेऽर्थे भवन्तावपि बुभुत्साविमर्शौ न तर्कतां प्राप्नुतः। तत्त्वज्ञानार्थमिति साक्षात् प्रमाणतामस्य निरस्यति। प्रमाणानुग्रहन्तु विशेषपरिशोधनद्वारेण विदधत् तत्त्वज्ञानाय कल्पते। तर्क ऊह इति पर्यायोपादानस्य प्रयोजनं वक्ष्यामः। तेनायं सूत्रार्थः, अविज्ञाततत्त्वे सामान्यतो ज्ञाते धर्मिण्येकपक्षानुकूलकारणदर्शनात् तस्मिन् सम्भावनाप्रत्ययो भवितव्यतावभासस्तदितरपक्षशैथिल्यापादने तद्ग्राहकप्रमाणमनुगृह्य तान् सुखं प्रवर्त्तयंस्तत्त्वज्ञानार्थमूहस्तर्क इति। यथा बाह्यकेलिप्रदेशादावूर्ध्वत्वविशिष्टधर्मिदर्शनात् पुरुषेणानेन भवितव्यमिति प्रत्ययः।

ननु तत्त्वज्ञानार्थमित्युक्ते सति सामर्थ्यादविज्ञाततत्त्वता लभ्यत एवेति किमर्थं स्वकण्ठेन पुनरनूद्यते ? बाढम्। किन्तु क्वचिद्विषये ज्ञाततत्त्वेऽपि पूर्वतर्केणावमृष्टे सत्युत्तरकालं तर्कितो मया अयमर्थ इति स्मर्यमाणतर्कविशेषणतया गृह्यमाणो विशेषणीभूतस्तर्कस्तत्त्वज्ञानार्थो भवतीति तद्व्युदासाय पुनरविज्ञाततत्त्वग्रहणम्। मार्गशोधनद्वारेण तर्कस्य तत्त्वज्ञानार्थत्वमिह विवक्षितम्, तच्चाविज्ञाततत्त्वेऽर्थे सम्भवतीति।

---

तर्कलक्षणे **विज्ञाततत्त्वेऽपि पूर्वतर्केणावमृष्ट** इति। यत्र तर्केण तत्त्वविज्ञानमभूत्।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

ननु नैव संशयनिर्णयान्तरालवर्ती तर्कप्रत्ययः कश्चिदस्ति, तथा हि यदि तावदनवगतविशेषस्य भवत्यसौ प्रत्ययस्तर्हि संशय एव भवेद् अवगतविशेषस्य भवन्निर्णयतामेव स्पृशेत् । पुरुष एवेत्येवकारार्थाद्युन्मेषरहितोऽपि प्रत्ययो निर्णयो न न भवितुमर्हति, तुरगपरिसरणसमुचितदेशकर्शनमपि यदि स्थाणुपक्षे स्थगयितुमलमिति मन्यसे तत्करचरणादिनरविशेषदर्शनवत्तन्निर्णयकारणमेव स्यात् । अथ तस्यामपि तुरगविहरणभुवि निखनति कञ्चन स्थाणुमिति शङ्कसे, यद्येवं स्थाणुपक्षानपायात् पुनः संशय एव स्यादिति । न तृतीयः पक्षः समस्तीति लक्षणाभावात् कस्येदं लक्षणमिति ?

उच्यते, न खलु स्वमतिपरिकल्पितविकल्पवितानेन प्रत्यात्मवेदनीयाः प्रतीतयो वरीतुं शक्याः, तथा हि स्थाणुर्वा पुरुषो वेति प्रतीतिरेका, पुरुष एवायमित्यन्या, पुरुषेणानेन भवितव्यमिति मध्यवर्तिनी तृतीया सम्भावनाप्रतीतिः स्वहृदयसाक्षिकैव,

साम्येन हि समुल्लेखः संशये पक्षयोर्द्वयोः ।
निर्णये त्वितरः पक्षः स्पृश्यते न मनागपि ॥
तर्कस्त्वेकतरं पक्षं विभात्युत्थापयन्निव ।

ननु सम्भावनाबीजवाजिवाहनदर्शनाद् वाहकेलिप्रदेशविशेषदर्शनं हि पुंसि सम्भावनामात्रमुपजनयितुमलं न तु शिरःपाण्यादिविशेषदर्शनवत् सर्वात्मना स्थाणुपक्षापसरणेन पुरुषनिर्णयाय प्रभवति, अतोऽयमगृहीतविशेषस्यैव भवति प्रत्ययो न तु संशयः, एकतरपक्षानुकूलकारणोपपत्त्या जायमानत्वात् । कथं पुनः पाणिपादादिपुरुषविशेषवदश्ववाहनदेशविशेषो विशेषकार्यं न कुर्यात्, करेणैवास्थाणुपक्षोत्सारणान्निर्णय एवायमिति कस्यैष पर्यनुयोगः । यथा हि शिरःपाण्यादिदर्शने सति पुरुषनिर्णयो भवति न तथा तुरगवहनदर्शने सति । अननुयोज्याश्च पदार्था एवं भवत एवं मा भूतेति । यथा च देशान्तरे स्पर्धमान एव स्थाणुपक्ष आस्ते, न तथा वाहकेलिभूमौ, अपि तु शिथिलीभवति सम्भवत्प्रमादत्वाच्च न सर्वात्मना निवर्तते ।

ननु यदि न निवर्तते तर्हि स्पर्धतां मा वा स्पर्धिष्ट स्थितस्तावत् स्थाणुपक्ष इति संशय एवायमिति, मैवम् । स्थाणुपक्षः सर्वात्मना न निवर्तते

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

नाप्यास्ते एवमेवायं त्रिशङ्कुरिवालम्बमानः प्रत्ययान्तरनिवृत्तये प्रभवतीति तथा प्रत्ययानुभवादेव परिकल्प्यते । वाहकेलिप्रदेशदर्शने हि यथा पुरुषविशेषाः स्मरणपथमवतरन्ति न तथा स्थाणुविशेषाः । उभयविशेषस्मरणजन्मा च संशय इति सोऽयं वाहकेलिप्रदेशविशेषः शिथिलयति स्थाणुपक्षं न सर्वात्मनोच्छिनत्तीति । जन्मोच्छेददर्शनात् कृतकतत्कारणप्रत्यय इति न तद्हृदयंगमम् । तेन क्रमेण निर्णय एवासौ तत्कारणतथात्वं न तर्क इति । अथवा कार्योदाहरणत्वादस्य तत्रापि संशयनिर्णयान्तरालवर्ती तर्कप्रत्ययो द्रष्टव्यः स उदाहरणं भविष्यति ।

ऊह इति पर्यायाभिधाने किं प्रयोजनम् ? लक्षणप्रतिपादनमेव । तदेव हि तर्कस्य लक्षणं यदूहरूपत्वम् इतरस्तु सूत्रे कारणविशेषाय फलनिर्देशः, कारणोपपत्तित इति कारणनिर्देशः । अविज्ञाततत्त्वेऽर्थे इति विषयनिर्देशः । तत्त्वज्ञानार्थं इति फलनिर्देशः ।

---

**त्रिशङ्कुरिवेति** । त्रिशङ्कुर्नाम राजा वसिष्ठशापाच्चण्डालतां प्राप्तो विश्वामित्रेण याजयित्वा स्वर्गं प्रापितः, चण्डालत्वेन देवैः प्रच्याव्यमानो विश्वामित्रहुङ्कारेण नाधःप्राप्तो भूमिम्, मध्य एव व्योम्नोऽवलम्बमात्रोऽद्यापि तिष्ठतीति। **जन्मोच्छेददर्शनात् कृतकतत्कारणप्रत्यय** इति । यदि हि जन्मकारणमकृतकं नित्यं स्यात् कारणानुच्छेदः स्यादिति कृतकधर्माधर्मकारणनिश्चय इति । तथा च भाष्यम् "तस्योदाहरणम्, किमिदं जन्म कृतकेन हेतुना निर्वर्त्यते ? आहोस्विद् अकृतकेन ? अथाकस्मिकम् ? इत्येवमविज्ञाततत्त्वेऽर्थे कारणोपपत्त्या ऊहः प्रवर्तते । यदि कृतकेन हेतुना निर्वर्त्यते, हेतूच्छेदोपपन्नो जन्मोच्छेदः । अथाकृतकेन, हेतूच्छेदस्याशक्यत्वादनुपपन्नो जन्मोच्छेदः । अथाकस्मिकम्, ततोऽकस्मान्निवर्तमानं पुनर्न निवर्त्स्यतीत्यनुवृत्तिकारणं नोपपद्यते इति जन्मानुच्छेदः । एतस्मिंस्तर्कविषये कर्मनिमित्तं जन्मेति प्रमाणानि प्रवर्तमानानि तर्केणानुगृह्यन्ते, तत्त्वज्ञानविषयस्य च विभागात् तत्त्वज्ञानाय कल्प्यते तर्क इति" । **अथवा कार्योदाहरणत्वादस्येति** । यथा वृद्धसंज्ञायां शालामालेति रूपोदाहरणं शालीयो मालीय इति तु कार्योदाहरणं तथात्र तर्कः स्वरूपेण न दर्शितस्तर्ककार्यः पुनर्निर्णयो दर्शित इति । तथाहि, धर्माधर्मरूपकृतकहेतुजन्यत्वे जन्मनो यावन्निर्णयफलमनुमानं सुप्रतिष्ठं नाभिहितं तावन्मध्ये तर्कदशात्र स्थितैवेति ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अपि च तर्कशब्दं केचिदनुमाने प्रयुञ्जते। यथा स्मृतिकाराः पठन्ति,

आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः॥ इति।

तदिहापि तर्कोऽनुमानं मा विज्ञायीत्यूहग्रहणम्। ऊहोऽत्र तर्क उच्यते नानुमानम्। तत्त्वज्ञानार्थताप्यस्य प्रमाणानुग्राहकत्वेन न साक्षात् तथैव चार्थं साधयितुमेष वादे प्रयुज्यते हृदयशुद्धिप्रकाशनार्थम्।

## तर्कविषये मतान्तराणि

कापिलास्तु बुद्धिधर्ममूहमाहुः, स तत्सिद्धान्तप्रसिद्धसत्त्वरजस्तमोरूपप्रकृतिप्रभवभुवनसर्गादिव्यवहारनिराकरणवर्त्मना पूर्वमेव निरस्तः।

जैमिनीयास्तु ब्रुवते, युक्त्या प्रयोगनिरूपणमूह इति। इह हि किञ्चिदुपदिष्टदृष्टादृष्टस्वभावसकलेतिकर्तव्यताकलापं कर्म भवति, यथा आग्नेयोऽष्टाकपाल इति दर्शपूर्णमासकाण्डे पठितम्, क्वचित् पुनः प्रधानकर्ममात्रमुपदिश्यते इतिकर्तव्यता तु काचन नाम्नायते, यथा 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति। तत्र विचार्यते किम् इतिकर्तव्यताविरहित यथाश्रुतप्रधानमात्रसम्पादनेन तत्र शास्त्रार्थप्रयोगः परिसमाप्यते उत तदपि सेतिकर्तव्यताकं प्रधानमनुष्ठेयमिति, तत्रापूर्वप्रयुक्तत्वेन धर्माणां प्रतिकरणं भेदे स्थिते निरङ्गस्य प्रधानस्याननुष्ठेयत्वाद् विध्यन्ताधिकरणसिद्धान्तन्यायेन

---

**हृदयशुद्धिप्रकाशनार्थमिति।** मयैवमयमर्थो ज्ञात इति प्रकाशनेन हि वीतरागता ततो दर्शिता भवति।

**कापिलास्तु बुद्धिधर्ममूहमिति।** शुश्रूषा-श्रवण-ग्रहण-धारण-विज्ञानोहापोहतत्त्वाभिनिवेशा अष्टौ ते बुद्धेर्धर्मा उक्ताः। तथा च 'विज्ञानमूहनम्' इत्याद्याहुः।

**तत्रापूर्वप्रयुक्तत्वेन धर्माणां प्रतिकरणं भेदे स्थिते इति।** प्रथमाह्निके व्याख्यातम्।

**विध्यन्ताधिकरणसिद्धान्तन्यायेनेति।** "इतिकर्तव्यताऽविधेर्यजतेः पूर्ववत्त्वम्" इत्यत्र विध्यन्ताधिकरणे चिन्तितम्। 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यत्र तावद्

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

प्राकृतवद् वैकृतं कर्म कर्तव्यमिति सेतिकर्तव्यताकं तदनुष्ठीयते। एवं सामान्यातिदेशे स्थिते सति कस्य वैकृतस्य कर्मणः कुतः प्रकृतेर्धर्मा अधिगन्तव्या इति चिन्तायां द्रव्यदेवतादिचोदनासारूप्यपर्यालोचनोपनतहृदयसन्निधानप्राकृतकर्मविशेषसम्बन्धिन एव तत्र धर्मा भवितुमर्हन्तीति स्थापिते युगपदुपनिपतदनर्गलचोदकव्यापारोपनीतनिखिलाखण्डमण्डलविध्यन्तकाण्डाधिगम्यधर्मसम्बन्धप्राप्तौ सत्यां

---

यागेनापूर्वसाधनमिति प्रतीयते, तत्र यागो लौकिकत्वाज्ज्ञायते, कथं चापूर्वं साधयेदित्येतन्न ज्ञायते। इह त्वपूर्वं साधयेदित्येतावन्मात्रमुक्तम्, कथं साधयेदितीतिकर्तव्यता नोक्ता। तेषां चार्थानां ज्ञायत एवेतिकर्तव्यता तेषां कर्तव्यतामात्रमुपदिश्यते यथौदनं पचेति। येषां तु न ज्ञायते ते सहेतिकर्तव्यतयोपदिश्यन्ते यथा दर्शपूर्णमासौ, एवं चेत्तन्न ज्ञायते यागेनापूर्वनिर्वृत्ताविति कर्तव्यता यस्मान्नोक्ता। सा चास्ति लौकिकी वैदिकी च। अत इतिकर्तव्यताया अविधिः, अविधानेन यजतेः पूर्ववत्त्वं विहितेतिकर्तव्यताकत्वम्। एवं च लौकिकी। सा कार्या स्याद् वैदिकी निःसंशया। "स लौकिकः स्याद् दृष्टप्रवृत्तित्वात्" इति लौकिकीमाशङ्क्य "लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात्" इत्यादिना वैदिक्येवेति सिद्धान्तितम्। स कर्तव्यतोपायो लौकिकः स्यात् पार्वणस्थालीपाकादौ तस्यैव प्रवृत्तिदृष्टेरिति पूर्वपक्षसूत्रार्थः। लिङ्गेन वेतिकर्तव्यता नियम्येत वैदिक्येव न लौकिकीति, लिङ्गं च सौर्ये चरौ प्रयाजे कृष्णलं जुहोतीत्यादि, एवमादिर्लिङ्गैर्ज्ञायते वैदिकीति, कथं कृत्वा? लिङ्गस्य तद्गुणत्वात्। एते हि प्रयाजादयो वैदिकस्य दर्शपूर्णमासापूर्वस्य गुणाः। अतो वैदिकाः पूर्वाङ्गत्वादेषां विकृतौ दर्शनमेवमुपपद्यते यदि तद् वैदिकमपूर्वं तेभ्यो विकृतियागेभ्यो धर्मान् प्रयच्छति, ते च तद्ग्रहणेन तत्पूर्वका भवेयुः, नान्यथा अस्ति च दर्शनम्, अतो वैदिक्येवेति द्वितीयसूत्रार्थः। **प्राकृतवद् वैकृतं कर्म कर्तव्यमिति।** विहितेति कर्तव्यताकस्य धर्मा अवहितेतिकर्तव्यताके कर्तव्या इत्यर्थः। **द्रव्यदेवतादिचोदनासारूप्ये।** तथा च सूत्रम् "यस्य लिङ्गमर्थसंयोगादभिधानवत्" इति यस्य वैदिकस्य विध्यन्तस्य लिङ्गं किञ्चिच्छब्दगतमर्थगतं वा वैदिक्यां कर्मचोदनायां तद्गुणवाक्ये वा दृश्यते, तत्र स विध्यन्तः स्यात्। कुतः? अर्थसंयोगात्। तस्यार्थस्य लिङ्गस्य तेन विध्यन्तेन संयोगोऽनुभूतपूर्वः संयोगिनोश्चान्यतरो दृश्यमान इतरददृश्यमानमनुमानाद् बुद्धौ सन्निधापयति, अभिधानवत्। यथाग्निहोत्रमित्यभिधानं कौण्डपायिनामयने श्रूयमाणं तैयमिकाग्निहोत्रधर्मान् बुद्धावुपस्थापयति।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

ते धर्माः कथं प्रयोक्तव्या इति युक्त्या प्रयोगनिरूपणमूह उच्यते । येनेत्थं प्रयोक्तव्या इति धर्मा व्यवस्थाप्यन्ते । स च त्रिविधो मन्त्रसामसंस्कारविषयः। मन्त्रविषयस्तावद् यथात्रैव सौर्ये चरौ प्रकृतिवद्भावेनाग्नेयात्, 'अग्नये त्वा जुष्टं निर्वपामि' इति निर्वापमन्त्रः प्राप्तः कथं प्रयोक्तव्य इति विचारणायामुच्चारणमात्रेण मन्त्राणामनुपयोगात् प्रयोगसमवेतद्रव्यदेवतादिप्रकाशनद्वारेण तदुपयोगस्य व्यवस्थितत्वाद् इह अविकृत एवायमग्नये जुष्टमिति प्रयुज्यमानो मन्त्रः प्रयोगसमवायिनोऽर्थस्याप्रकाशनादसङ्गतो भवेत्, सर्वात्मना चोत्सृज्यमानो मन्त्रो मन्त्रप्रकाशितकर्माननुष्ठानान्न प्रकृतिवत् कृतं भवेदित्यग्निपदोद्धारेण सूर्यपदप्रक्षेपेण मन्त्र ऊहेनेत्थं प्रयोक्तव्य इति गम्यते सूर्याय त्वा जुष्टं निर्वपामीति ।

ननु ऊहप्रवरनामधेयानाममन्त्रत्वादित्थमपि न मन्त्रेण स्मृतं कर्मकृतं स्यात् ? नैतत्, 'एकदेशविकृतमनन्यवद्भवति' इति न्यायात् । सामविषयस्तु गीतयः सामानीति स्थिते क्वचित् कर्मणि 'रथन्तरमुत्तरयोर्गायति, बृहदुत्तरयोर्गायति' इति श्रुतेः सा बृहद्रथन्तरगीतिर्यस्यामृचि योनिभूतायामुत्थिता ततोऽन्यस्यामपि प्रयुज्यते । तादृगक्षरापायेऽपि च सामगीतिरृगन्तराक्षरेष्वपि प्रत्यभिज्ञायते रथन्तरमनेन श्लोकमिति व्यवहारदर्शनात् । संस्कारविषयः खल्वपि प्रकृतौ 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' इति संस्कारश्चोदितः,

---

**ननूहप्रवरेति** । तदुक्तम् "अनाम्नातेषूहमात्रत्वमाम्नायेषु हि विभागः" इति । ऊहः 'अग्नये' इत्यस्य स्थाने 'सूर्याय' इति पदस्य प्रयोगः । अध्वर्युणा प्रवरानुश्रावणे क्रियमाणे ये यजमानसम्बन्धिगोत्रप्रसिद्धाद् उपयोगमभिस्वरैरुच्चर्यान्ते ते प्रवराः । सुब्रह्मण्य इन्द्र आगच्छेति सुब्रह्मण्यनिगदे अमुकगोत्रो यजत इति । यद् यजमानस्य संकीर्तनं तन्नामधेयं येषूहप्रवरनामधेयेषु । अमन्त्रत्वं शिष्टैर्मन्त्रत्वेनानभिधानादिति । **रथन्तरमुत्तरयोर्गायतीति** । यद् योनिभूतायाम् ऋचि कवतीषु रथन्तरं गायतीति वचनात् "कया नश्चित्र आभुवदूती" इत्यस्यामुत्पन्नम्, तदुत्तरयोर्धातोरुत्तराख्यग्रन्थविशेषविपठितयोः, गायतीति प्राकृतं रूपं येन विशिष्टस्तोत्रसाधनता रथन्तरस्य प्रकृतौ जाता ऊह्यते **प्रोक्षिताभ्यामुलूखलेति** । प्रोक्षणाख्यो यः संस्कारस्तुषकणविप्रमोकाख्यसंस्कारजनकयोरुलूखलमुशलयोः कृतः, स नखेषु तत्संस्कारजनकत्वादूह्यते ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

क्वचिच्च विकृतौ श्रूयते 'नखनिर्भिन्नश्चरुर्भवति' इति, तत्रोलूखलमुसलयोः प्रकृतौ पुरोडाशापेक्षिततुषकणविप्रमोकपूर्वकतण्डुलीभावसम्पादनद्वारेणोपयोगाद् विकृतावपि तत्कार्यापन्नानां नखानां प्रोक्षणाख्यः संस्कारः क्रियत इति । सोऽयं त्रिविध ऊहः ।

केचित्तु पञ्चविधमूहमाचक्षते 'धर्मस्यार्थंकृतत्वाद् द्रव्यगुणविकारव्यति-

---

**धर्मस्यार्थंकृतत्वाद् द्रव्यगुणविकारे**ति । तत्र द्रव्योदाहरणं प्रतिपादितम् । बार्हस्पत्यं चरुं नैवारं सप्तदशशरावं निर्वपेदिति नीवारव्यक्तिरूपद्रव्याश्रयणेन तत्प्रवृत्तेः । गुणोदाहरणं तु संस्थिते षडहे मध्वश्नातीति, षडहेनोपासीतेति द्वादशाहे चोदना स्वतन्त्रा वा । तत उक्तम्, संस्थिते षडहे मध्वश्नातीति । यदि दैवात् षडहः संतिष्ठते न क्रियतेऽशनम् । मध्वशनं कर्तव्यमिति षडहकार्ये मध्वशनं विधीयते । गुणत्वं तु मध्वशनस्य प्रदेशान्तरे षडहाङ्गत्वेन विधानात् । यदा षडहेनोपासनं क्रियते तदा तदङ्गत्वेन मध्वशनमपि क्वचित् प्रतिपादितमिति तद् दृष्ट्वा गुणशब्देन मध्वशनस्य प्रतिपादनम् । विकारोदाहरणम्, नखनिर्भिन्नश्चरुर्भवतीत्यत्र नखा विकारशब्देनाभिधीयन्ते, तुषकणविप्रमोकलक्षणे वाधिकारे नखाः श्रुताः । व्यतिक्रमः पुनरप्रागागम्यसमर्थस्य यूपस्य परित्यागोऽन्यस्यासमर्थस्याश्रयणं यथा परिधौ पशुं नियुञ्जीतेति । न हि परिधिरल्पपरिमाणस्य पशोरप्यागम्ये समर्थः इति । प्रतिषेधस्तु न गिरा गिरेति ब्रूयादैरं कृत्वोद्गायेदिति ज्योतिष्टोमे यज्ञ-याज्ञीयं साम प्रकृत्य स्तुतं न गिरा गिरेति कुर्यादिति । तत्र साम्नि यद् गिरेति पदमस्ति तन्न ब्रूयात् । किं तर्हि कुर्यादित्याह, ऐरं कृत्वोद्गायेदिति इराशब्दस्य विकारमिरा इरेत्यादिकं कृत्वा गायेदित्यर्थः । तदेतेषु नीवारमधुभक्षणनखपरिधीरापदेषु द्रव्य-गुण-विकार-व्यतिक्रम-प्रतिषेधरूपेषु व्रीहि-षडहोलूखलमुशल-यूप-गिरापदधर्माः कर्त्तव्याः । नेति तत्र पूर्वपक्षवादी, ये व्रीहौ विदितास्ते कथमविहितत्वाद् नीवारेषु क्रियेरन्, ये च षडहधर्मास्ते कथं मध्वशने, ये चोलूखलमुशलयोः श्रुताः प्रोक्षणादयस्ते कथं नखेषु, यूपोपदिष्टाश्च कथं परिधौ, गिरापदे च ये श्रुता गीत्यादयस्ते कथम् इरापदे श्रुत्यभावादनुष्ठीयेरन्नित्याह ततः सिद्धान्तसूत्रमिदं **धर्मस्यार्थंकृतत्वा**दिति । एतेषु नीवारादिषु चोदनानुबन्धः । व्रीह्यादिसम्बन्धेन या धर्माणां चोदना तयानुबन्धः सम्बन्धः, तत्सम्बन्धेन नीवारादिसम्बन्धेन व्रीह्यादिगतत्वचोदितधर्मसम्बन्धः स्यात् । कुतः ? समवायात् । यतोऽसौ धर्मः प्रोक्षणादि व्रीहीन् प्रोक्षतीति व्रीह्यादिसम्बन्धेन श्रुतस्तत्र तत्र समवैतीति सम्भाव्यते कारणान्तरादतः कारणान्तरसम्भाव्यमानात् तत्समवायात् कर्तव्या एव ते धर्मा इत्यर्थः । किन्तु



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

क्रमप्रतिषेधे चोदनानुबन्धः समवायात्' इति सूत्रमनुसरन्तः । एतत्तु प्रतत्यमानमतिप्रसङ्गमावहति विविधमेव चोहं याज्ञिका अनुमन्यन्त इति ।

अत्र वदन्ति, सोऽयमूहशब्दः श्रोत्रियैरनुमाने प्रयुक्तो यथा स्मृतिकारैस्तत्र तर्कशब्दः 'यस्तर्केणानुसन्धत्ते' इति । तथा हि वैकृतं कर्म धर्मि, तत्समवेतार्थप्रकाशकमन्त्रप्रयोगनिर्वर्त्यमिति साध्यो धर्मः, कर्मत्वात् प्राकृतकर्मवत् । मन्त्रो वा तत्समवेतप्रकाशकः प्रयोज्यो मन्त्रत्वात् प्राकृतमन्त्रवदिति । प्राकृतेषु च कर्मसु तथा तथा व्याप्तिग्रहणात् सर्वोऽयमनुमानमार्ग एव । नखाः प्रोक्षणीयाः प्रयोगोपयोगितण्डुलनिर्वर्तकत्वादुलूखलमुसलवदिति । सामसु तु स्पष्टमेव वचनमस्ति 'रथन्तरमुत्तरयोर्गायति' इति तदभावेऽपि मन्त्रसंस्कारसमानयोगक्षेमत्वमेव ।

अपि च शब्दपृष्ठस्थितन्याये सहस्रव्युत्पादनात्मके मीमांसाशास्त्रे तन्न्यायलभ्योऽर्थश्चोदनार्थ एवेति स्थापितम्, अतश्च यथोक्तोहलभ्यस्यार्थस्य चोदनार्थता मा निर्वर्तिष्टेति सोऽयमूहः शब्द एवान्तर्भावणीयः, प्रमाणान्तरगोचरो वा धर्मः स्यात् । न्यायविशेषात्मकस्तूहो नानुमानादर्थान्तरं स्यात् ।

---

कारणान्तरमित्याह, धर्मस्यार्थकृतत्वादिति । प्रकृतौ तावद् धर्माणामर्थकृतत्वमपूर्वप्रयुक्तत्वं प्रतिपादितम्, योऽसावपूर्वसाधनभूतोंऽशो व्रीह्यादेः, तमुद्दिश्य धर्मप्रयोगः, प्रयोजनत्वात् । न स्वरूपोद्देशेनार्थत्वप्रसङ्गादिति । तस्य चांशस्य नीवारादिषु भावात् तेषु तद्धर्मप्राप्तिरिति तत्र नानर्थत्वम्, तदेवमुदाहरणपञ्चकेनोहपञ्चकमत्र सूत्रे दर्शितम् । भट्टेन तु दृष्टमुख्यार्थता-स्वार्थसमवेतार्थतादिभिः प्रयुक्ताः प्रकृतौ मन्त्रागताः कार्यातिदेशतो विकारेष्वनिषिद्धोहकार्यापन्नेषु पञ्चधेति पञ्चविधत्वं यत् प्रतिपादितं तद् मन्त्रोहस्यैवेत्यलम् ।

**तदभावेऽपि मन्त्रसंस्कारसमानयोगक्षेमत्वमिति** । उत्तराधरं रथन्तरं योनाविव विशिष्टस्तोत्रसम्पादकत्वेनोपकारि रथन्तरत्वात् प्रकृतरथन्तरवदिति । मन्त्रसंस्कारसमानयोगक्षेमत्वम्, यथा मन्त्रसंस्कारयोरनुमानं प्रदर्शितं तथात्रापीत्यर्थः ।

**न च वितर्कासहायः** शब्दस्तात्त्विकमर्थं प्रतिपादयत्यतो वितर्कमात्रस्य शब्द एवान्तरभावो वितर्कविशेषेऽस्तूहोऽनुमानमेवेत्याह **न्यायविशेषात्मकस्त्विवति** । अतो नास्ति मीमांसकदृष्ट्या पृथगूहः कश्चिदिति अथ 'सूर्यायेति पदप्रक्षेप ऊहः' स कथमनुमानं

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अग्नय इत्यस्य स्थाने सूर्यायेति पदस्य प्रयोग ऊहस्य फलम्, नोहः । इह तु पूर्वोक्तया नीत्या प्रमाणव्यतिरिक्त ऊह उपपादितः, श्रोत्रियास्तु तदनभिज्ञतया न्याये न्यायफले वोहशब्दमुपचरितवन्त इत्यलं शास्त्रान्तरोद्गारगहनाभिः कथाभिः ।

तदेष मीमांसककल्प्यमानो नोहः प्रमाणव्यतिरेकमेति ।
प्रमाणसन्देहदशान्तरालवर्ती तु तर्कः कथितोऽत्र शास्त्रे ॥

**निर्णयलक्षणम्**

तर्कानन्तरं निर्णयो भवति पठितश्चेति स लक्ष्यते,

**विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥**

अवधारणमपि तथा स्यादित्यर्थग्रहणम् । इन्द्रियादिजनितमपि तदवधारणमस्त्येव न्यायोपरमहेतोस्तु निर्णयस्योद्देशात् स एवानुमानजन्यो लक्षणीय इहेति पक्षप्रतिपक्षाभ्यामित्युक्तम् ।

एकाधिकरणौ धर्मौ तुल्यकालौ विरोधिनौ ।
पृथक्परिग्रहौ पक्षप्रतिपक्षावुदाहृतौ ॥

न हि ताभ्यां निर्णयः, तयोरन्यतरविषयो हि भवति न तत्करणक एवेति, सत्यम्, इह तु पक्षप्रतिपक्षशब्दाभ्यां तद्विषयौ साधनतदुपालम्भौ लक्ष्येते, तौ च तस्मिन् करणमेव । किमर्थं पुनर्लक्षणा आश्रीयते साधनोपलम्भाभ्यामेवेति कथं न सूत्रितम् ? एवमभिधीयमाने पुनस्तयोर्विषयो मृग्यः, लक्षणाप्रयोगे तु सोऽप्यवगतो भवेत्, मुख्यमभिधाय तदितरो लक्ष्यते । भवत्वेवम्, द्वाभ्यां कथं तु निर्णयः, एकमेव हि साधनं निर्णयाय कल्पते ? एवमेतत्, न द्वितीयमपि साधनं निर्णयनिमित्तमाचक्ष्महे, किन्तु तदुपालम्भं साधनञ्च साधनोपालम्भश्च साधनोपालम्भौ ताभ्यां निर्णयः ।

---

स्यादिति । तत्राप्याह **अग्नय इत्यस्य स्थाने** इति ।

निर्णयलक्षणे **मुख्यमभिधाय तदितरो लक्ष्यत** इति । **पक्ष-प्रतिपक्षाभ्यां** पक्षप्रतिपक्षविषयाभ्यां साधनदूषणाभ्यां पक्षप्रतिपक्षयोः **साधनोपलम्भाविति** ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

एतदुक्तं भवति स्वपक्षं प्रमाता निर्णयतीति न खल्वेवं न जाने च दूषणमुत्प्रेक्षमाणः स्वपक्षे साधनमधिगच्छन् परपक्षसाधने च दूषणमुत्प्रेक्षमाणः प्रमाता निर्णयतीति, किन्तूपालम्भस्य क इव निर्णयजन्मनि व्यापारः ? स हि परपक्षसाधनमवच्छिन्द्यादिति । अस्त्वेतत् तदुच्छेदद्वारेण अपि तु स्वपक्षसाधनमहिमानमाविष्कुर्वन् कल्पत एव निर्णयायेति युक्तो द्वयोरपि करणभावः ।

नन्विदानीमर्थग्रहणमनर्थकम् एवंविधसाधनाधीनजन्मा हि न निर्णयाभासः सम्भवति । साधनोपालम्भलक्षणार्थावपि च पक्षप्रतिपक्षशब्दौ विषयमभिवदितुं ननु शक्नुत इत्युक्तमेवेति कोऽर्थोऽर्थग्रहणेन ?

उच्यते पक्षप्रतिपक्षयोस्तु द्वयोरन्यतरत्रार्थेऽवधारणं भवति नोभयत्र । स एव च परमार्थतोऽर्थः, इतरस्तु भ्रान्तिकल्पित इति प्रदर्शनायार्थपदोपादानम् । लक्ष्यमाणसाधनोपालम्भनिष्ठत्वात्तु पक्षप्रतिपक्षशब्दयोर्विषयनिर्देशार्थमर्थपदमित्येके । विमृश्येति किमर्थम् ? वस्तुस्वरूपकथनार्थमेव । अनुमानकरणको हि निर्णय इह लक्ष्यते इत्युक्तम्, अनुमानञ्च संशयविषये प्रवर्तत इति तर्कानन्तरमप्यनेनैवाशयेनास्योपादानम् । संशयादनन्तरं तर्कस्तर्कादूर्ध्वञ्च निर्णयो दृष्टः प्रवर्तमानोऽतः स तत्पूर्वक उच्यते ।

निर्णये तु समुत्पन्ने बुभुत्सा विनिवर्तते ।
अत एव हि मन्यन्ते तदन्तं न्यायचिन्तनम् ।।

भवत्वेवम्, इदन्तु चिन्त्यतां क्व नियमः ? किं विमर्शे, किं पक्षप्रतिपक्षयोः, किं निर्णय इति, त्रयेऽपि च नोपपद्यत इति । न विमृश्यैव निर्णयोऽविमृश्यापि भावात् । न पक्षप्रतिपक्षाभ्यामेवेन्द्रियादेरपि तदुत्पादात् । न निर्णय एव तर्कस्यापि क्वचिदनिवृत्तेः । उक्तमत्रोद्देशसूत्रे तत्त्वज्ञानपदोपादानात्

---

**विषयनिर्देशायार्थपदमिति** । **अर्थः** पक्ष इति ।

**अत एव हि मन्यन्त इति** । यत एव बुभुत्सा निवर्ततेऽत एव बुभुत्सापूर्वकत्वात् संशयस्य, तदभावे तत्पूर्वकन्यायप्रवृत्त्यभावः । **अविमृश्यापि भावादिति** । इन्द्रियादिजन्मन इति शेषः । **न निर्णय एव तर्कस्यापि क्वचिदनिवृत्तेरिति** । प्रतिबन्धसामग्रीवैकल्याभ्यामिति शेषः ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

प्रमाणपदेन च तत्फलाक्षेपान्न निर्णयमात्रोद्दिष्टेन किमपि प्रयोजनम्, विशिष्टस्तु निर्णयो लक्षणत्वेन विवक्षितः ।

परीक्षाविषयो यो हि निर्णयो न्यायनिर्मितः ।
नियमत्रयमप्येतत् तस्मिन्न हि न युज्यते ।।

न हि न विमृश्यैव भवन्ति, विमर्शपूर्वकत्वात् परीक्षायाः । अनुमानञ्च सन्दिग्धे विषये प्रवर्तत इति प्रायेण तद्व्यवहारः ।

यद्यपि क्वचिदसन्दिग्धेऽपि विषये दृष्टं प्रवर्तमानमनुमानमनलानर्थिता-यामतर्कितोपनतपर्वतनितम्बनिर्गतधूमदर्शनेन कृशानुकल्पनमिव, तथापि वस्तुयोग्यतावशेन सन्दिग्धविषयमेवानुमानमिच्छन्ति न्यायविदः । प्रकृतश्च निर्णयः पक्षप्रतिपक्षाभ्यामेव निर्णय एवेति न शक्यते नियन्तुमन्यथा न्यायानुप-रमादिति । शास्त्रे तु विनापि संशयादस्ति निर्णयः ।

यद्यपि च तत्रापि सूत्रकृता सर्वपरीक्षाणां संशयपूर्वकत्वमुपदेशाति-देशाभ्यामभ्यधायि तथापि नासौ शास्त्रीयो निर्णयः परीक्षाकार्यत्वात् । यस्तु शास्त्र एव क्वचिद्विषयनिर्णयः स विमर्शवर्जमुत्पद्यते । वादेऽपि विमर्शरहिते भवति निर्णयः, उभौ निश्चितौ वादं कुरुतः सन्दिग्धस्य तत्रानधिकारात्, कथं तर्ह्येष प्रवादः संशयच्छेदो वादस्य फलमिति ? प्रथममुभयोरपि निश्चितयोर्वादप्रवृत्तावन्तराले बलादापतति युक्तिद्वयोपनिपातवतः संशय इति वस्तुनिर्णयावसानत्वाद् वादस्य संशयच्छेदफलत्वमाचक्षते ।

यद्यप्यनिश्चितमतिः कुरुते न वादं श्रुत्वा तथापि परकीयनयप्रवेशम् ।
अन्तर्मतद्वयबलाबलचिन्तनेन संशय्य निर्णयति नूनमसौ स्वपक्षम् ।।

---

**वस्तुयोग्यतावशेन सन्दिग्धविषयमेवानुमानमिति** । सन्दिग्धं हि वस्तु परीक्ष्यते तत्त्वज्ञानार्थं न निश्चितमिति वस्तु योग्यता ।

**संशयपूर्वकत्वमुपदेशातिदेशाभ्यामिति** । उपदेशेन यथा संशयादीनां "समाना-नेकधर्माध्यवसायादन्यतरधर्माध्यवसायाच्च न संशयः" इत्यादिना; प्रयोजनादीनां तु "यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः" इत्यतिदेशेन । **वादेऽपि विमर्शरहितो भवति निर्णय इति** । न हि तत्र सन्देहविषयः परस्मै निश्चितत्वेन प्रतिपद्यते, वीतरागकथात्वात् तस्य ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

**वादलक्षणम्**

न्यायपरीक्षाद्वारकवस्तुविचारयोग्यास्तिस्रः कथा वादिनो भवन्ति वादो जल्पो वितण्डेति । तत्र वादस्तावदुच्यते,

**प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ।।**

पक्षप्रतिपक्षौ व्याख्यातौ, तयोः परिग्रहोऽभ्युपगमो नियमः । एको वक्ति नित्यः शब्दः अपरस्त्वनित्यः शब्दः इत्याह, सोऽयं पक्षप्रतिपक्षपरिग्रहो वादः । एतच्च रूपं कथात्रयेऽपि साधारणमिति विशेषमाह प्रमाणतर्कसाधनोपालम्भ इति । प्रमाणैस्तर्केण च साधनं साधनोपालम्भश्चास्मिन् क्रियत इति प्रमाणतर्कसाधनोपालम्भः । न त्वीदृशी वितण्डा तस्याः प्रतिपक्षसाधनोपन्यासशून्यस्वभावत्वात् ।

**तर्कस्य वादोपयोगित्वे शङ्कानिरासः**

ननु प्रत्यक्षादेः प्रमाणस्य परप्रतीत्यनुपायत्वान्न तेन वादे साधनोपालम्भौ शक्यक्रियौ । तर्कस्य तु प्रतीतिसाधनत्वमपि तावन्न सम्भवति सम्भावनाप्रत्ययस्वभावत्वात् किमुत परप्रत्यायनाङ्गतेति नतरां तस्य साधनोपालम्भहेतुत्वम् । सत्यमेवम्, इह तु न प्रमाणशब्देन प्रत्यक्षादेरनुमानमपि तु प्रमाणमूला अवयवा उच्यन्ते । तैश्च सिद्ध्युपालम्भौ क्रियेते, एवं तर्कस्य तु स्वतः साधनोपालम्भकरणकौशलशून्यात्मनोऽपि प्रमाणानुग्राहकत्वात् पारम्पर्येण तद्धेतोराशयशुद्धिप्रदर्शनार्थमुपादानम् ।

**पञ्चावयवोपपन्नपदसार्थक्यम्**

यद्येवं प्रमाणपदेनैव तन्मूलावयवप्रतिपादनात् पञ्चावयवोपपन्नग्रहणमतिरिच्यते ।

तत्र केचिदाचक्षते, प्रमाणतर्कसाधनोपालम्भ इति वादलक्षणे, छलजातिनिग्रहस्थानसाधनोपालम्भ इति च जल्पलक्षणे श्रवणाद् वादे सर्वात्मना छलादिनिषेधप्रसक्तौ कतिपयनिग्रहस्थानोद्भावनाभ्यनुज्ञानार्थं पञ्चावयवोपपन्न-

---

वादलक्षणे **कतिपयनिग्रहस्थानेति** । पञ्चावयवोपपन्नं न न्यूनावयवमधिकावयवं वेति व्यवच्छेदो लभ्यत एव ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

ग्रहणम् । अनेन च 'हीनमन्यतमेनाप्यवयवेन न्यूनम्' । 'हेतूदाहरणाधिकमधिकम्'इति न्यूनाधिकयोरुद्भावनमनुज्ञायते । सिद्धान्ताविरुद्धग्रहणेनापि 'सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः' इति विरुद्धाख्यहेत्वाभासोद्भावनमनुज्ञातमित्येवं वादे त्रीणि निग्रहस्थानान्युद्भावनीयानि ।

**सूत्रपदसार्थक्यप्रदर्शनम्**

अन्ये वदन्ति, विरुद्ध एव हेत्वाभासो वादे चोद्यते नानैकान्तिकादिरिति । कथमेतद् युज्यते 'निग्रहस्थानेभ्यः पृथगुपदिष्टा हेत्वाभासा वादे चोदनीया भविष्यन्ति, इति भाष्यकारवचनात् प्रमाणपदेन च तन्मूलावयवाक्षेपात् प्रमाणाभासमूलनिरासे सति सकलहेत्वाभासोद्भावनमपि तत्र सिद्धमिति । सिद्धान्ताविरुद्धाग्रहणेन 'सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्त इत्यपसिद्धान्ताख्यनिग्रहस्थानानि वादे उद्भाव्यन्त इति तदनुपपन्नम्, न हि त्रीणि वा अष्टौ वा वादे निग्रहस्थानानि चोदनीयानीति चोदना वैदिकी, राजशासनं वा । वस्तुपरिशुद्धिसाधनं सर्वमेव तत्र प्रयोगार्हम् ।

अयन्तु विशेषः । जल्पे कस्याञ्चिदवस्थायां बुद्धिपूर्वकमपि छलादिप्रयोगः क्रियते, वादे तु वृथा तेषां प्रयोगः । भ्रान्त्या तु कथञ्चित् प्रयुक्तानामवश्यमुद्भावनम्, अनुद्भावने वस्तुपरिशुद्धेरभावात् ।

कथं तर्हीदं पदद्वयं 'सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः' इति अप-

---

**विरुद्ध एव हेत्वाभासो वादे चोद्यते नानैकान्तिकादिरिति कथमेतद् युज्यत** इति । प्राक्पक्षे हि विरुद्ध एव हेत्वाभासो विशेषेणोपदिष्ट इतीतरानैकान्तिकादिहेत्वाभासप्रतिषेधोऽर्थादायात इति स्थितम्, तदनेन निराकरोति । ननु यद्यष्टौ निग्रहस्थानानि पञ्च हेत्वाभासा हीनाधिकापसिद्धान्तैः सह तदा भाष्यविरोधः । भाष्यकारेण हि सिद्धान्ताविरुद्धपदव्याख्यानावसरे "सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः" इति विरुद्ध एव हेत्वाभासो विशेषेण संगृहीत इति । मैवम् । 'सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः' इति भाष्यकारेण पठितं सूत्रप्रतीकसाम्यात् लेखकदोषेणासौ पाठो नास्त्यत्रेति अष्टनिग्रहस्थानवाद्यभिप्रायः ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

सिद्धान्तादिसम्यग्दूषणदिक्प्रदर्शनेनैवम्प्रकारवस्तुशुद्ध्यनुगुणनिग्रहस्थानजाताद्यनुज्ञानार्थमेवेत्यभियुक्ताः। अप्रतिभाविक्षेपादयो हि न वादे पराजयहेतवः, क्षणान्तरेणाप्यागत्यानुस्मृत्य च साधनमुपालम्भं वा तत्र वदन्न पराजीयते। प्रतिज्ञाहान्यादि तु सम्यक्पराजयकारणमखिलमाभ्यां पदाभ्यामभ्यनुज्ञातमत्रेति।

नन्विदानीं प्रमाणतर्कग्रहणमपार्थकं पञ्चावयवोपपन्नपदेनैव प्रमाणमूलावयवोपदेशाद् वस्तुपरिशुद्ध्यनुगुणनिग्रहस्थानाभ्यनुज्ञानाच्च किमिव नोक्तम्? न। अभिप्राये नैर्मल्यनिवेदनद्वारकवादजल्पविवेकप्रतिपादनार्थत्वात् स्वप्रतिपत्तिसाधनमपि प्रत्यक्षादि वादे प्रयोक्तुमुचितमाशयशुद्धिमुपदर्शयितुम्। अत्र वस्तुनि मम प्रथमं तर्क इत्थं प्रवृत्त आसीत्ततः प्रमाणमिदं प्रवृत्तमित्येवमपि तत्र वक्तव्यमत एव चान्यतरपक्षनिर्णयावसान एव भवति वादः, न जल्पवदलोकदूषणडम्बरविरचितपरपरिभवपर्यवसानोऽपीति तथा बुद्धिपूर्वमाभासानामप्रयोग इति। निर्मत्सरकथात्वमस्योक्तमित्यकलुषाकूतकथनाय प्रमाणतर्कपदम्।

अपि च साधनोपलम्भव्यतिषङ्गप्रतिपादनमपि तस्य फलम्, उभावपि परस्परमनुबन्धेन वादिभ्यां परीक्षमाणौ पक्षप्रतिपक्षौ वादतां प्रयोजयतः, न तु स्वगृहे शास्त्रे वा विविच्यमानौ। प्रमाणैरेव जल्पे व्यवहार इति नियमशङ्कानिरसनमपि तत्पदोपादानप्रयोजनमुक्तमन्यैरिति कृतमतिविस्तरेण, सर्वथा वादलक्षणं सर्वं सुस्थम्।

वादञ्च निर्णयफलार्थिभिरेव शिष्यसब्रह्मचारिगुरुभिः सह वीतरागैः।
न ख्यातिलाभरभसप्रतिवर्धमानस्पर्धानुबन्धविधुरात्मभिरारभेत ॥

**यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥**

यथोक्तोपपन्नग्रहणेन सर्वातिदेशो वादजल्पयोरविशेष इति शङ्कमानाः केचन पक्षप्रतिपक्षपरिग्रहमात्रातिदेशमेव व्याचक्षते। इयतस्तु पूर्वसूत्रानुवृत्त्याऽपि सिद्धेर्मन्दफलमेव यथोक्तोपपन्नवचनं भवेदिति समस्तातिदेश एव वरम्।

न च तत्रापि वादजल्पयोः साम्यं गम्यमानार्थम्। अतिदेशाच्छ्रौत एवार्थोऽतिदिश्यते न गम्यमानस्तत्कृत एव च तयोर्भेदः। तथा च प्रमाण-

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

तर्कसाधनोपालम्भ इत्यत्र गम्यमानोऽर्थोऽभिप्रायनियमः स नातिदिश्यते। सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इत्यत्रापि बुद्धिपूर्वजात्यादिप्रयोगप्रतिषेधतदुद्भावननियमरूपो गम्यमानोऽर्थः सोऽपि नातिदिश्यत इति कुतस्तयोरविवेकः। अत एव च बुद्धिपूर्वकप्रयोगानुज्ञानाय छलजातिनिग्रहस्थानसाधनोपालम्भ इत्युक्तम्। भवत्वेवं छलादीनां त्वसदुत्तरत्वात् कथमिव साधनोपालम्भहेतुत्वम्? परपक्षप्रतिक्षेपद्वारकमिति चेत्, न, असदुत्तरत्वेन प्रतिक्षेपेऽपि तेषामसामर्थ्यात्। एवमपि च साधनग्रहणमनर्थकमेवेति, सत्यमेवम्, किन्तु कस्याञ्चिदवस्थायां स्वप्रतिपत्तिसाधनोपहिततत्त्वज्ञानरक्षायै तान्यपि व्याप्रियन्ते। यदा जानन्नपि परपक्षकृशिमानं स्वपक्षे द्रढिमानञ्च क्वचिदवसरे परप्रयुक्ते साधने दूषणं सपदि न पश्यति स्वपक्षसाधनञ्च झगिति न स्मरति तदा छलादिभिरप्युपक्रम्य परमभिभवत्यात्मानञ्च रक्षतीति।

ननु यदि परश्छलादीनि जानीयात् तेषु चानुरूपमुत्तरमभिदधीत कथं जीयेत प्रत्युत जयत्येव, सत्यम्, तथाप्येकान्तपराजयाद् वरं सन्देह इति युक्तमेव तत् प्रयोगेण स्फुटाटोपकरणम्।

नन्वीदृशि प्रयोजनानि जिगीषतो जनस्य जनपदसदसि भवन्ति, तस्यापि न निपुणमतिसदसि, मुमुक्षोस्तु दूरापेतैव कथेयमिति कथमिह मोक्षशास्त्रे जल्पाद्युपदेशः?

नैतदेवम्, मुमुक्षोरपि क्वचित् प्रसङ्गे तदुपयोगात्। यथोक्तं तत्त्वाध्यवसायसंरक्षणासीनम् अनेकशिष्यगणोपास्यमानं रहस्यतत्त्वमुपदिशन्तं शान्तमानसमाचार्यम् अनार्यः कश्चिद् विपश्चिदाभासः कुतश्चिदागत्य दुरधिगतकतिपयाक्षरपरिचयजनितगुरुतरगर्वगद्‌गदया गिरा भोस्तपस्विन्! किमाख्यायते हुङ्कारम्, आन्वीक्षिकी सरलमतिप्रियेयं विद्या, क्व वेदाः, क्व वेदप्रामाण्यम्, क्वात्मज्ञानम्, क्वापवर्ग इत्यादि मन्दं विहस्य सहस्यसहसादृष्टमेघ इव प्रकटितकाण्डदण्डकाशनितम्बवित्रासिताश्रममृगवर्गमुद्ग्राहयन्नाकुलयति, तदा जगज्जालमिन्द्रजालपण्डितविलसितमिति जानन्नप्याशाम्यो यदि तदुपेक्षते, न तिरस्करोति, सद्यः सम्यक् साधनाप्रतिभासेऽपि यदि छलादिभिरेनं न शमयति, तदा तस्मिन् गते तत उत्थाय शिष्यगणा ब्रूयुः कष्टमस्थाने क्लिष्टाः स्मः।



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

योऽसावस्माकमाचार्यः प्रख्यातो न्यायवित्तमः ।
अद्य त्वागत्य सोऽन्येन पण्डितेन पराजितः ॥

तच्छ्रुत्वा जन इतरोऽपि सत्पथस्याशैथिल्यात् सपदि तमेव मा ऽनुयासीत् ।
तन्नूनं परिभवभूमिकामसह्यां नेतव्यः सदसि स वावदूकपाशः ॥

तद्विघातघटने निरर्गलं जल्पमन्त्रमुपदिष्टवान् मुनिः ।
आनुषङ्गिकमपि प्रयोजनं तस्य रागिजनतासु वर्णितम् ॥

**वितण्डालक्षणम्**

**स प्रतिपक्षस्थापनाहीनो वितण्डा ॥**

स एव यथोक्तलक्षणको जल्पो वितण्डा भवति । को विशेष इति चेत्, आह 'प्रतिपक्षस्थापनाहीनः' इति । उत्तरपक्षवादी वैतण्डिकः प्रथमवादिप्रसाध्यमानपक्षापेक्षया 'हस्तिप्रतिहस्ति' न्यायेन प्रतिपक्ष इत्युच्यते । तमसावभ्युपगच्छत्येव न तत्र साधनमुपदिशति परपक्षमेवाक्षिपन्नास्ते । तर्हि साधनाद् विपक्षोऽपि सोऽस्य नास्त्येवेति प्रतिपक्षहीनो वितण्डेत्युच्यतां किं स्थापनाग्रहणेन ? न, अभ्युपगममात्रेण तद्भावात् तमनभ्युपगम्य प्रलपतः कस्तस्य शृणुयात् । औपचारिको वा परमतपराकरणरूप एवास्य पक्षः, तस्मिन् हि सति स्वपक्षो हि तस्य सिध्येदिति । परमताक्षेपप्रवणप्रवृत्तश्च बलाद् द्वितीयपक्षवाद्येव वैतण्डिक इति । तदेवं पक्षोऽस्यास्तीति साधनन्तु नास्तीति सम्यक् सूत्रितं 'स प्रतिपक्षस्थापनाहीनो वितण्डा' इति ।

इत्युदाहृतमिदं कथात्रयं यत् परस्परविविक्तलक्षणम् ।
स्थूलमप्यनवलोक्य कथ्यते वाद एक इति शाक्यशिष्यकैः ॥

---

**तर्हि साधनाद् विना पक्षोऽपि सोऽस्य नास्तीति** । साध्यो हि पक्षो भवति न साधनशून्य इति । **औपचारिको वा परमतनिराकरणरूप** इति । परमतनिराकरणं परमत प्रतिषेधवाक्यम्, तस्य च यद्यपि स्वतः साध्यत्वाभावात् पक्षत्वं नास्ति तथापि पक्षसिद्धिहेतुत्वेनोपचरितं पक्षत्वम्, पक्ष एव च प्रतिपक्षः । **तदेवं पक्षोऽस्यास्तीति** वदन् । **स प्रतिपक्षस्थापनाहीन** इत्यनेन प्रतिपक्षस्य स्थापना प्रतिपक्षस्थापना, तया हीनम् । न प्रतिपक्षेण स्वपक्षेणापोति प्रतिपादितं भवतीति मन्यते, अन्यथा हि स्थापनापदं निरर्थकं स्यादिति ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

**हेत्वाभासविभजनम्, तल्लक्षणञ्च**

पक्षधर्मत्वादीनि पञ्च लक्षणानि हेतोरुक्तानि, तेषामेकैकापायात् पञ्च हेत्वाभासा भवन्तीति तान् दर्शयितुमाह,

**सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः ।।**

अत्र हेत्वाभासश्रुतिरेव निर्वचनसहितासामान्यलक्षणं बोधयति । अहेतवो हेतुवदाभासन्त इति हेत्वाभासाः, लक्षणैकदेशयोगाच्च हेतुवदाभासनमहेतोरप्युपपद्यते । सकललक्षणापायेऽपि पञ्चमीनिर्देशादिर्भ्रमहेतुरित्येके । सव्यभिचारादिपदपर्यन्तवर्तिनी तु सैव श्रुतिर्विभागमवगमयति प्रमाणश्रुतिवदित्युक्तम् । पक्षधर्मादिलक्षणानाञ्च क्रमनियमाभावात् साध्यसमविरुद्धसव्यभिचारातीतकालप्रकरणसमा हेत्वाभासा इति पाठो नाश्रितः ।

ननु त्रय एव हेत्वाभासा इति शाक्याः ? न, प्रत्यक्षागमबाधितस्य सप्रतिपक्षस्य च हेतोः पूर्वप्रदर्शितत्वात् ।

नन्वेकस्यैव रूपद्वयवैकल्यात् कथं न षष्ठादयस्तत्प्रभेदाः स्युः, यथा नित्यः शब्दश्चाक्षुषत्वादिति । एष हि पक्षे वृत्त्यभावादसिद्ध उच्यतामुत सामान्यादिविपक्षादप्रच्युतेः सव्यभिचारः, उत जात्यन्तरमेव ताभ्यामिति ।

नैतदेवम्, एकैकरूपापायनिमित्तभेदपञ्चकप्रतिपादने कृते द्वित्रिरूपापायान्न रूपान्तरमवतरति किन्तु तेषामेव समावेशः स्यात् । अपि च प्रथमगृहीतान्यतमरूपवैकल्यलब्धके हेत्वाभासरूपेऽस्मिन् किं रूपान्तरनिरूपणेनेत्यास्तामेतत् ।

नन्वप्रयोजको नाम षष्ठो हेत्वाभासः समस्तीति न पुनरपि पञ्चत्वम् । न, तस्यान्यथासिद्ध एवान्तर्भावं वक्ष्यामः । अवान्तरभेदविवक्षायान्तु हेत्वाभासा इति सिद्धम् ।

**सव्यभिचारलक्षणम्**

तेषां सव्यभिचारस्तावदुच्यते ।

**अनैकान्तिकः सव्यभिचारः ।।**

व्यभिचार एकत्र व्यवस्थाऽनियमः, तेन सह वर्तते इति सव्यभिचारः,

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

विपक्षादप्रच्युत इत्यर्थः। एकस्मिन्नन्ते भवन् ऐकान्तिकस्तद्विपर्ययादनैकान्तिक इति स एवार्थः। एवमिह लक्ष्यलक्षणपदयोर्यथाकाममभ्युपगमो न प्रत्यक्षादिवद् व्यवस्थया। सव्यभिचारपदे लक्ष्याभिधायिनि लक्षणवचनमैकान्तिकपदम्, अनैकान्तिकपदे तु लक्ष्यवाचिनि सव्यभिचारपदं लक्षणप्रतिपादकम्, प्रसिद्धाप्रसिद्धविभागापेक्षया पिककोकिलवद् द्रष्टव्यम्। पिकः कोकिल इत्युक्ते यस्य पिकशब्दार्थः प्रसिद्धः स ततः कोकिलशब्दार्थमवभोत्स्यते प्रसिद्धकोकिलशब्दार्थश्च पिकशब्दार्थमिति।

आह, भवत्वेवम्, इदन्तु चिन्त्यताम्, अनैकान्तिक इति किमयं पर्युदासः प्रसज्यप्रतिषेधो वा ? किञ्चातः ? पर्युदासपक्षे स्वपक्षनियतादैकान्तिकादन्यः स एवानैकान्तिक इति स एवैको हेत्वाभासः स्यात्, अतश्च पञ्चसंख्या विप्रलुप्येतेति। प्रसज्यप्रतिषेधे त्वैकान्तिकाभावस्य निवृत्तिरूपस्य हेत्वाभासता भवेत्, न लक्ष्यत्वेनाभिमतस्य विपक्षावृत्तेर्हेत्वन्तरस्य प्रमेयत्वादेरिति।

उच्यते, प्रश्न एवायमनुपपन्नः। संशयानो हि परं पृच्छति, संशयश्चोभयथादर्शनाद् भवति। न च नामपदसम्बद्धस्य नञो द्वयी वृत्तिर्दृष्टा। अश्राद्धभोजीत्यादौ हि भुजिना नञ् संबध्यते श्राद्धं न भुङ्क्त इति, न तु नाम्ना श्राद्धेनेति। आख्यातेनापि प्रयोज्यमानः क्वचित् प्रकरणसामर्थ्यानुरोधात् प्रत्ययार्थसम्बन्धमवधूय धात्वर्थमेव केवलमालिङ्गन् पर्युदासवृत्तिर्भवति, यथा 'नेक्षेतोद्यन्तमादित्यम्' इति। न तु नाम्ना सम्बध्यमानः क्वचिदपि पर्युदासवृत्तिमुल्लङ्घ्य प्रसज्यप्रतिषेधमात्रतामवलम्बमानो दृश्यते, अब्राह्मणादौ सर्वत्र तदन्यावगतिदर्शनादिति कुतस्त्यः संशयः? अथवा किमनयावान्तरचिन्तया यथा पृष्टं प्रकृत एवोत्तरमुच्यते, एकस्मिन्ननित्यपक्षे वा नियत ऐकान्तिक एकपक्षवृत्तिरुच्यते, ततोऽन्यः पक्षद्वयवृत्तिरनैकान्तिको भवति, एवं न सर्वे

---

हेत्वाभासलक्षणे **यथा नेक्षेतोद्यन्तमादित्यमिति**। अत्र हि ईक्षणसम्बद्धेन, ततो ईक्षणादन्यो धात्वर्थः प्रतिपद्यते सङ्कल्पाख्यः, नेक्षेतानीक्षणसङ्कल्पं कुर्यादित्यर्थः। **प्रकरणसामर्थ्यानुरोधादिति**। तत्र हि तस्य व्रतानीत्युपक्रमः, नेक्षतोद्यन्तमादित्यमित्यादीनां प्रजापतिव्रतानां प्रतिपादनात्। व्रतशब्दश्च विशिष्ट एव सङ्कल्पे रूढ इति तद्वशातत्तः प्रकृतिप्रतिपादितेऽर्थे वृत्तिः

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

हेत्वाभासाः पक्षद्वयवृत्तय इति न संख्याहानिः । अतः पर्युदासपक्षे तावन्न दोषः । प्रसज्यप्रतिषेधेऽप्यैकान्तिको न भवति स एवाहेतुरिति न निवृत्तिमात्रपरत्वम् । अश्राद्धभोजीति कृता पुरुष उच्यते न श्राद्धभोजनाभावमात्रम्, एवमिहापि तद्धितेनैकान्तनियततताप्रतिषेधविशिष्टो हेतुरेवोच्यते नाभावमात्रम्, इत्येव मुभयथापि न दोषः । तस्योदाहरणम्, अनित्यः शब्दः प्रमेयत्वादिति । एष हि नित्यानित्यपक्षयोरन्यतरस्मिन्नपि न नियत इति विपक्षवृत्तित्वादनैकान्तिकः, तदेवं व्यतिरेकाख्यहेतुलक्षणशून्योऽनैकान्तिक उक्तो भवति ।

ननु षट्प्रकाराः परैरनैकान्तिका इष्यन्ते । सपक्षैकदेशवृत्तिर्विपक्षव्यापी, विपक्षैकदेशवृत्तिः सपक्षव्यापी, उभयपक्षैकदेशवृत्तिः, उभयपक्षव्यापी, साधारणश्चतुष्प्रकारः, असाधारणो विरुद्धाव्यभिचारी चेति स कथमिह न निर्दिश्यते ?

उच्यते, सपक्षव्याप्यादिभेददर्शनं तावदप्रयोजनकमशक्यञ्च हेत्वाभासानामवान्तरभेदेनानन्त्यात् । विपक्षाद् व्यावृत्तिर्यस्य नास्ति स सव्यभिचार इत्यन्यतमहेतुरूपरहितत्वमनैकान्तिकलक्षणमिह विवक्षितम्, तच्चोक्तमेव किमवान्तरभेदपरिगणनेन । असाधारणविरुद्धाव्यभिचारिणौ तु न सम्भवत एव हेत्वाभासाविति न व्याख्यायेते ।

ननु साधारणादसाधारणस्यापि गन्धवत्त्वादेः संशयहेतुत्वदर्शनात् कथमसम्भवः ? अनेकधर्मोपपत्तेश्च संशयो भवद्भिरपि व्याख्यायत एव ।

नैतदेवम्, उभयविशेषसहचरितधर्मदर्शनं हि तदनुस्मरणप्रायं संशयमुपजनयति, असाधारणस्तु असाधारणत्वादेव न तत्सहचरः कदाचिदुपलब्ध

---

**ननु षट्प्रकाराः परैरनैकान्तिका इष्यन्त इति ।** सपक्षैकदेशवृत्तिः, यथा अगौरयं विषाणित्वादिति; विपक्षव्यापी चायम्, सर्वेषु गोषु विषाणित्वस्य सद्भावादिति । विपक्षैकदेशवृत्तिः सपक्षव्यापी यथा गौरयं विषाणित्वादिति; सर्वेषु गोषु सपक्षेषु विषाणित्वस्य भावादगोषु च विपक्षेषु केषुचिन्महिषादिषु भावात् अश्ववादिषु चाभावात् । उभयपक्षैकदेशवृत्तिर्यथा नित्यः शब्दः स्पर्शवत्त्वादिति, नित्येष्वाकाशादिषु सपक्षेषु स्पर्शवत्त्वस्य अभावात् परमाण्वादिषु च भावात् सपक्षैकदेशवृत्तिता, विपक्षेषु चानित्येषु बुद्ध्यादिष्व भावाद् घटादिषु भावाद् विपक्षैकदेशवृत्तित्वम् । उभयपक्षव्यापी यथा नित्यः शब्दः प्रमेयत्वादिति ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

इति कथं संशयहेतुः ? कथं तर्ह्यनेकधर्मोपपत्तेरिति वर्णयिष्यते ? वर्णितमेतत् । वस्तुनो हि विशेषधर्मः कश्चिदसाधारणः केनापि धर्मान्तरेण सहचरितो दृष्टः । सोऽयं शब्दे विभागजत्वाख्यो धर्मः केनचिद् धर्मान्तरेण द्रव्यत्वेन गुणत्वेन वा सहचरितो भवेदितीत्थमनेकधर्मोपपत्तेः संशयो वर्णितः । तदिहापि गन्धवत्त्वमसाधारणमित्थमेव यदि संशयहेतुतया वर्ण्यते तर्हि साधारणाद् वस्तुधर्मादेव संशयो भवेन्नासाधारणाद् गन्धवत्त्वात् । न हि तन्नित्यानित्ययोरन्यतरेणापि सहचरितमुपलब्धम् । वस्तुधर्मस्तु धर्मान्तरानुयायी दृश्यत इति वस्तुधर्मत्वमेव तत्कारणमतो नित्या भूर्गन्धवत्त्वादित्यसाधारणानैकान्तिको न वक्तव्यः । विरुद्धाव्यभिचार्यपि न वाच्य एव, एकत्र धर्मिणि परस्परविरुद्धद्वयप्रयोजकहेतुद्वयोपनिपातस्यानुपपत्तेः ।

ननु प्रत्यक्षो वायुः स्पर्शवत्त्वाद् घटवत्; अप्रत्यक्षोवायुःअरूपत्वादाकाशवत् इत्यस्ति हेतुद्वयसन्निपातः, स एव च विरुद्धाव्यभिचार्युच्यत इति । अत्र तावदेतदेव वक्तव्यम्, कोऽयमपूर्वः प्रामाणिकव्यवहार ईदृशो यदनुमानेन प्रत्यक्षत्वमप्रत्यक्षत्वं वा साध्यत इति । इन्द्रियजप्रमितिविषयो हि प्रत्यक्षोऽर्थो भवति । स एव वायुर्यदीन्द्रियजे प्रत्यये प्रतिभात्येव किमनुमानेनेति । किं वानयोरन्यतरो हेतुरवश्यमप्रयोजकः, वस्तुनो द्वैरूप्यानुपपत्तेः । हेतौ च प्रयुक्ते तद्गुणदोषपरीक्षणमेव प्रतिवादी विधत्ताम्, कोऽवसरः प्रतिहेतूपन्यासस्य ?

विडम्बनार्थस्तदुपन्यास इति चेत्, न, विडम्बनोपन्यासस्य जात्युत्तरप्रकारत्वात् । इह च हेत्वाभासा वास्तवा एवानुमानदोषाः प्रतिपाद्यन्ते, न च विरुद्धाव्यभिचारी नाम वास्तवो हेतुदोषः, एकत्र प्रयोजकविरुद्धहेतुद्वयसमावेशासंभवस्योक्तत्वात् ।

कथं तर्हि प्रकरणसम इति चेत्, तत्रैव विशेषं वक्ष्यामः ।

अथ हेतुप्रयोगरहितोभयवादिपरिगृहीतपक्षप्रतिपक्षोपन्यासमात्रं विरुद्धाव्यभिचारिणो रूपमुच्यते ? सोऽयं विप्रतिपत्तेः संशयो भवति, न हेत्वाभासादस्मादिति ।

अपि च संशयजननमनैकान्तिकलक्षणमुच्यते चेत् ? काममसाधारणस्य विरुद्धाव्यभिचारिणो वा यथा तथा संशयहेतुतामधिरोप्य कथ्यताम-

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

नैकान्तिकता, न तु संशयजनकत्वं तल्लक्षणमिन्द्रियादेरपि तज्जनकत्वेन तथाभाव प्रसक्तेः, अपि तु पक्षद्वयवृत्तित्वमनैकान्तिकलक्षणम्, स तु पक्षद्वयवृत्तित्वात् संशयमपि जनयतीति वस्तुस्वभावोऽयम्, अतोऽसाधारणविरुद्धाव्यभिचारिणोः कथञ्चित् संशयहेतुत्वेऽपिपक्षद्वयवृत्त्यभावान्नानैकान्तिकवर्गेऽन्तर्भावः।

क्व तर्हि तावन्तर्भविष्यतः ? जात्युत्तराणामानन्त्यात् तत्रेति वक्ष्यामः ।

तस्मादसाधारणसंज्ञकस्य हेतोर्विरुद्धाव्यभिचारिणो वा ।
विपक्षवृत्तित्वमतर्कयन्तो वदन्त्यनैकान्तिकतां नयज्ञाः ॥

**विरुद्धलक्षणम्**

**सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥**

सपक्षविपक्षयोर्वृत्त्यवृत्ती हेतौ लक्षणमुक्तम्, ते यस्य विपर्यस्ते दृश्येते यः सपक्षे न वर्तते विपक्षे च वर्तते स साध्यविपर्ययसाधनाद् विरुद्धो भवति, सोऽयमुच्यते सिद्धान्तमभ्युपेत्येति । सिद्धान्तशब्दो यद्यपि धर्मविशिष्टे धर्मिणि व्याख्यातः, अयमित्थमित्यभ्युपगमविषयीकृतोऽर्थः सिद्धान्त इति, तथापीह तदेकदेशसाध्यधर्मविषयो लक्ष्यते । तं सिद्धान्तसाध्यधर्ममभ्युपगम्य यो विरुणद्धि व्याहन्ति, तद्विपर्ययं साधयति स विरुद्ध इत्यर्थः ।

ननु समानकर्तृकयोः क्त्वाप्रत्ययः स्मर्यते, इह च हेतोरचेतनस्याभ्युपगमे कर्तृत्वासम्भवात् पुरुषस्तत्कर्ता भवेत्, सिद्धान्तञ्च विरुणद्धि हेतुरिति भिन्नकर्तृकत्वम्, उच्यते, समानकर्तृकत्वसिद्धये हेतोरेवाभ्युपगमे कर्तृत्वमुपचाराद्वर्णयिष्यते, हेतुबलात् पुरुषेणाभ्युपगमः क्रियमाणो हेतुनैव कृतो भवति। एवं च स एवाभ्युपगन्ता स एव विरुणद्धीति न भिन्नकर्तृकत्वम् ।

ननूपचारपरिग्रहश्चेदभिमतस्तदत्र त्रितयं वक्तव्यम्, साध्येऽर्थे प्रमाणबाधः, निमित्तम्, प्रयोजनञ्चेति । साध्येऽर्थे प्रमाणबाध उक्तः, एवं हेतोरचेतनत्वं निमित्तमप्यस्ति हेतुसाधनको ह्युपगम इति, प्रयोजनन्तु विशेषविरुद्धानां हेत्वाभासत्वनिवारणम् । सिद्धान्तशब्दस्य समुदायवाचिनो यदेकदेशेऽवस्थापनं तस्यापि विशेषविरुद्धव्यवच्छेद एव फलम् । विशेषविरुद्धानां हि हेत्वाभासत्वाभ्युपगमे सर्वानुमानोच्छेदप्रसङ्गः । न हि तथाविधो हेतुरिह

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

जगति कश्चिदवाप्यते यः साध्यसिद्धयेऽभिधीयमानो धर्मस्य वा धर्मिणो वा विशेषं न कञ्चन बाधते । तथा हि अनित्यः शब्दः कृतकत्वादिति सकलतार्किकगृहप्रसिद्ध एव हेतुरनित्यतां साधयन्नपि यद् यत् कृतकं तत्तदश्रावणं दृष्टम्, यो यः कृतकः स स व्योमविशेषगुणो न भवतीति धर्मिणो विशेषं बाधत एवेत्यहेतुः स्यात्, न चैवं युक्तमिति न विशेषविरुद्धो नाम हेत्वाभासोऽभ्युपगन्तव्यः, किन्तु साध्यस्वरूपविपर्ययसाधन एवेति ।

अत एव यथा तीर्थान्तरे वर्ण्यते विरुद्धश्चतुष्प्रकारः, धर्मस्वरूपविपरीतसाधनः, धर्मिस्वरूपविपरीतसाधनः, धर्मविशेषविपरीतसाधनः, धर्मिविशेषविपरीतसाधन इति, तथेह नेष्यतेऽतिप्रसङ्गस्य दर्शितत्वादिति । अस्योदाहरणं नित्यः शब्दः कृतकत्वादिति ।

नन्वेकैकलक्षणापायात् पञ्च हेत्वाभासा इत्युक्तम् । अस्य च हेतोरुभे लक्षणे न स्तः, यथा ह्यस्य सपक्षे वृत्तिर्नास्ति तथा विपक्षादपि व्यावृत्तिः । यदि हि सपक्षादिव विपक्षादपि व्यावृत्त एव भवेद् गन्धवत्त्ववदसाधारण एव स्यादिति । सत्यमेवम्, किन्तु विपक्षादव्यावृत्तिर्व्यभिचारं प्रति प्रयोजकतां प्रतिपद्यते, प्रतिपक्षगामी हि व्यभिचरित इत्युच्यते । सपक्षे वृत्तिविच्छेदस्तु विपर्ययसिद्धौ प्रयोजक इति सत्यामपि विपक्षवृत्तौ सपक्षवृत्तिविच्छेदनिबन्धनमेवास्य विरुद्धत्वमुच्यते विपक्षादप्रच्युतः स्वसाध्यमेव न साधयेत् सपक्षे त्ववर्तमानोऽसौ विपरीतमपि साधयतीति तल्लक्षणापायकृत-

---

**विरुद्धश्चतुष्प्रकार** इति । धर्मस्वरूपविपरीतसाधनः, यथा नित्यः शब्दः कृतकत्वादिति । धर्मिस्वरूपविपरीतसाधनः, यथा समवायो धर्मी द्रव्यादिभ्यो व्यतिरिच्यत इति साध्यम्, इहप्रत्ययहेतुत्वात् संयोगवदिति; इहप्रत्ययहेतुत्वं संयोगत्वेन सह व्याप्तमुपलब्धं दृष्टान्त इति समवायस्यासमवायरूपतां साधयति । धर्मविशेषविपरीतसाधनः, यथा परार्थाश्चक्षुरादयः सङ्घातत्वाद् शयनासनादिवदिति । सङ्घातत्वस्य संहतपरार्थत्वेन शयनादिषु व्याप्तस्योपलम्भाच्चक्षुरादिष्वपि संहतपरार्थत्वं साधयन्नसंहतपरार्थतारूपधर्मविपर्ययसाधनः । धर्मिविशेषविपरीतसाधनः, यथा न द्रव्यं न गुणः कर्म वा भावः सत्प्रत्ययहेतुत्वात् सामान्यविशेषवदिति । अयं हेतुर्यथा सत्ताया द्रव्यादिवैलक्षण्यं साधयति तथा सत्प्रत्ययकर्तृत्वं विशेषमपि बाधते, गोत्वादिषु सामान्यविशेषेशु तस्यासम्भवादिति ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

मेवास्य विरुद्धत्वमाचक्षते, इत्यलं सूक्ष्मेक्षिकया। तदित्थमुक्तं सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध इति।

अन्ये त्वन्यथा व्याचक्षते किल साध्यधर्मविपर्ययसाधकवद् अपसिद्धान्तप्रतिज्ञाविरोधादयोऽपि सिद्धान्तविरोधिनः सङ्ग्रहीतुं युक्ता एव। ते चैवं व्याख्यायमाने न संगृहीताः स्युः। क्त्वाप्रत्ययसिद्धान्तशब्दौ च न समन्वितौ स्याताम्। तस्मादभ्युपगतसिद्धान्तविरोधी विरुद्ध इति सूत्रार्थे वर्णिते अभ्युपगतं सिद्धान्तं यो विरुणद्धि स विरुद्धः, तत्कालोपात्तप्रतिज्ञाविषयीकृतं वा अवसरान्तरव्यवस्थापितं वेत्येतत्सङ्ग्रहश्च कृतो भविष्यति। सिद्धान्तशब्दश्च न सङ्कोचितो भविष्यति। क्त्वाप्रत्ययस्त्वसङ्गतत्वादुपेक्ष्यत एव भिन्नकर्तृकत्वादानन्तर्यस्य गम्यमानस्य चानुपयुक्तत्वादिति। तथा च भाष्यकारेण पूर्वाभ्युपगतसिद्धान्तानुगुणमेवोदाहरणमुक्तम् 'सोऽयं विकारो व्यक्तेरपैति नित्यत्वप्रतिषेधात्, अपेतोऽप्यस्ति विनाशप्रतिषेधात्' इति। अत्र हि प्रतिषिद्धनित्यधर्मत्वादित्ययं हेतुर्व्यक्तेरपेतोऽपि विकारोऽस्तीत्यमुं सिद्धान्तं विरुणद्धि अनेन वा विरुध्यत इति।

एतत्त्वहृदयङ्गममिव व्याख्यानम्। अपसिद्धान्तप्रतिज्ञाविरोधादेर्निग्रहस्थानसूत्रे हेत्वाभासेभ्यः पृथगुपदेशात् किमिह तत्सङ्ग्रहेण प्रत्युत सङ्ग्रह एव

---

**सोऽयं विकारो व्यक्तेरपैतीति** । तथा च भाष्यम्, "सोऽयं विकारो व्यक्तेरपैति नित्यत्वप्रतिषेधात्, न नित्यो विकार उपपद्यते। अपेतोऽपि विकारोऽस्ति विनाशप्रतिषेधात्। सोऽयं नित्यत्वप्रतिषेधादिति हेतुर्व्यक्तेरपेतोऽपि विकारोऽस्तीत्यनेन स्वसिद्धान्तेन विरुद्धयते। कथम्? व्यक्तिरात्मलाभः। अपायः प्रच्युतिः। यद्यात्मलाभात् प्रच्युतो विकारोऽस्ति नित्यत्वप्रतिषेधो नोपपद्यते। यत् खलु व्यक्तेरपेतस्यापि विकारस्यास्तित्वं तत् खलु नित्यत्वमिति। नित्यत्वप्रतिषेधो नाम विकारस्यात्मलाभात् प्रच्युतेरुपपत्तिः। यदात्मलाभात् प्रच्यवते तदनित्यम्, तदस्ति न तदात्मलाभात् प्रच्यवते। अस्तित्वं चात्मलाभात् प्रच्युतिरिति च विरुद्धावेतौ धर्मौ सह न सम्भवत इति। सोऽयं हेतुर्यं सिद्धान्तमाश्रित्य प्रवर्तते तमेव व्याहन्तीति"। परिदृश्यमानोऽयं महाभूतादिविकारो व्यक्तेरपैत्यभिव्यक्ताद् रूपात् प्रच्यवते। **प्रतिषिद्धनित्यधर्मकत्वादिति साङ्ख्यप्रयोगः।**



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

दोषः। यो हि मीमांसकोऽहमित्यभ्युपगम्य नित्यः शब्दः कृतकत्वाद् घटवदिति ब्रूयान्न तस्यायं हेतुर्विरुद्धो भवेदपि त्वपसिद्धान्तान्निगृह्येत। तस्मात् साध्यविपर्ययसाधन एव विरुद्ध उच्यते न तु पूर्वाभ्युपगतस्वसिद्धान्तविरुद्धः। न च निरभिप्राय एव सूत्रकृता क्त्वानिर्देशः कृतः, किन्तु ततः प्रतीयमानमानन्तर्यमप्यपेक्षमाणेन यो हि सिद्धान्तमभ्युपेत्य प्रतिज्ञाय तत्सिद्ध्यर्थतयोपादीयमानस्तमेव विरुणद्धि स विरुद्धो हेत्वाभास इति प्राक्तनमेव व्याख्यानमनवद्यम्।

अतः प्रतिज्ञाविपरीतसाधनाद् विरुद्धतामेति न हेतुरन्यथा।
विशेषबाधादिनिबन्धनं पुनर्बहुप्रकारत्वममुष्य नेष्यते ॥

**सत्प्रतिपक्षलक्षणम्**

**यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥**

एकैकलक्षणापायनिमित्तहेत्वाभासपञ्चकप्रतिज्ञानादसत्प्रतिपक्षत्वलक्षणवैकल्यात् किल प्रकरणसमो नाम हेत्वाभासो वक्तव्यः। स च न सम्भवति सत्प्रतिपक्षस्य हेतोरभावाद् अद्व्यात्मकत्वाद्धि वस्तूनामेकत्र परस्परविरोधिधर्मद्वयप्रयोजकहेतुसमावेशो नास्तीत्यसकृदुक्तम्। अत एव विरुद्धाव्यभिचारी निरस्तः। अनुमानविरुद्धमनुमानञ्च नेष्यत एव। तत् कुतः सत्प्रतिपक्षो हेत्वाभासः ? अतश्च लक्ष्याभावात् कस्येदं लक्षणमित्याशङ्क्याह यस्माद् इत्यादि। विचार्यमाणौ प्रागुक्तलक्षणकौ पक्षप्रतिपक्षौ प्रकरणम्, तस्य चिन्ता संशयात् प्रभृति आ निर्णयाद् यद्यपि भवति तथापीह विमर्शात्मिकैव गृह्यते, सा यस्माद् भवति। कस्माच्च सा भवति ? विशेषानुपलम्भात्। स एव विशेषानुपलम्भो यदि निर्णयार्थमुपदिश्यते तत्प्रकरणम् अनतिवर्तमानत्वात् प्रकरणसमो भवति, नित्यः शब्दः अनित्यधर्मानुपलब्धेराकाशवत्, अनित्यः शब्दो नित्यधर्मानुपलब्धेर्घटवदिति। सोऽयं सत्प्रतिपक्षो हेतुरिह लक्ष्यो विद्यते। न च द्व्यात्मकानि वस्तूनि, प्रमातारस्तु रूपमेषां नियतमवधारयितुमशक्नुवन्त एव भ्राम्यन्तीति। तथा ह्येको

---

विशेषबाधादिनिबन्धनमिति। यथा प्रतिपादितं धर्मविशेषबाधादि।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

विशेषानुपलब्धेः पक्षधर्मान्वयव्यतिरेकावपश्यंस्ततस्तथेति साध्यं बुध्येत, तथैव च परं प्रत्याययेदिति । इतरोऽपि द्वितीयविशेषानुपलब्धेः साधनतां बुद्ध्वा प्रत्यवस्थानञ्च करोतीति सप्रतिपक्षक एवैष प्रकरणसमो हेत्वाभासः । तथा च न तावदयं सम्यग् हेतुः, प्रतिपक्षोपहतत्वेन स्वसाध्योपस्थानसामर्थ्यशून्यत्वात् । हेत्वाभासोऽपि च भवन् न तावदसिद्धः, साध्ये धर्मिणि शब्देऽनुपलभ्यमाननित्यधर्मत्वस्य हेतोः सद्भावात् । नापि विरुद्धः, साध्यविपर्ययसाधननिमित्तभूतः सपक्षवृत्तिवियोगानुपपत्तेः । नाप्यनैकान्तिकः, पक्षद्वयसाधारणत्वानवधारणात्, संशयजनकत्वन्तु न तस्य लक्षणमित्युक्तमेव ।

नन्वेकस्मिन् पक्षे नियत एकान्तिकस्तद्विपर्ययादनैकान्तिकः । स चायं नित्यानित्यपक्षयोरन्यतरत्रापि न नियत इत्यनैकान्तिक एव स्यात् ? अपि चाहुः 'अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः' इति । तत्र यथेन्द्रियादेरबोधकत्वाद् वा संशयविपर्ययस्वभावावभाससमुत्पादनदौरात्म्याद् वा भवत्यप्रामाण्यव्यवहारः, एवमनुमानमपि तथैव वर्त्मना प्रमाणाभासतामवलम्बते । तत्र असिद्धस्तावदलभमानो धर्मिणि वृत्तिं तत्र साध्यधर्मधियमाधातुमनधिकृत इत्यज्ञानफलत्वादप्रामाण्यमनुभवति । विरुद्धस्तु विपर्ययसाधन इति भवन्त एव प्रतिपन्नाः । संशयजनकस्त्वनैकान्तिको भवितुमर्हति, न तु पारिभाषिकविपक्षवृत्तित्वमेव तस्य लक्षणमुचितम् । अयमपि चान्यतरपक्षनियमविरहिततनुरिति किमिति न भवति विमर्शमुपदधदनैकान्तिक इति त्रय एव हेत्वाभासाः ।

उच्यते, न फलनियमेन लक्षणनियमः कर्तुं शक्यते, यद्यपि द्विविधं त्रिविधं वा भवत्यप्रमाणफलं तथापि न त्रिलक्षणके लिङ्गेऽविनाभावः परिसमाप्यते अपि तु पञ्चलक्षणक इति प्रसाधितोऽयमर्थः । तद्वैकल्याच्च हेत्वाभासानामपि पञ्चत्वमेव, फलन्तु द्विविधमस्तु त्रिविधं वा न ह्यप्रतिपत्तिजनकं किञ्चिल्लिङ्गमुपलभामहे, न चाप्रतिपत्तिः प्रयत्नजन्या प्रागभावस्य निसर्गसिद्धत्वादित्यलमवान्तरचिन्तनेन, न फलापेक्षो लिङ्गलक्षणनियमः । तत्र यथा पक्षधर्मरहितत्वमसिद्धलक्षणमेष च हेतुः पक्षधर्मान्वयव्यतिरेकाणामन्यतमेनापि रूपेण न विकल इति कथमनैकान्तिकतां प्रतिपत्स्यते ? व्यस्ततायां हि

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

सर्वाण्येतानि सन्ति लक्षणानि, समस्तं वस्तु नोपन्यस्तमेव हेतुत्वेन नित्यानित्यधर्मानुपलब्धेरिति ।

ननु यद्यस्य पक्षधर्मान्वयव्यतिरेका निरपवादाः सन्ति कथं तर्हि न हेतुरेवायम्, इतरस्यापि पक्षधर्मान्वयव्यतिरेकाणां निरपवादानां सम्भवात् सोऽपि न कथं हेतुरस्त्विवति चेत्, न, वस्तुनो द्वैरूप्यानुपपत्तेः । एवमिमौ हेतू पक्षद्वयेऽपि बुद्धिं जनयन्तौ संशयमावहतो नानैकान्तिकवद्विपक्षवृत्तित्वेनेति हेत्वाभासान्तरत्वम्, एवंविधस्य चास्य प्रकरणसमस्य विरुद्धाव्यभिचारीति नाम यदि क्रियते तदपि भवतु न पुनरैकान्तिकप्रभेदतामवलम्बते तल्लक्षणासंस्पर्शादुभयप्रतीतिजनकौ हीमौ चेद् उभयतो नोभयपक्षवृत्तीति । नाप्ययं कालात्ययापदिष्टः प्रत्यक्षागमयोरन्यतरस्यापि बाधकस्यानुपलम्भात् । अनुमानन्तु नानुमानस्य बाधकं भवितुं क्षममित्युक्तम् । न चेतरेतरबाध्यपेक्षया अनयोरसिद्धत्वमभिधेयम्, संशयजनकत्वेऽनुभवसिद्धे सति विशेषानुपलब्धेरप्रत्याख्येयत्वात् ।

ननु निश्चितस्य साधनप्रयोगाधिकारात् कथं चिन्तावान् साधनं प्रयुञ्जीत निश्चितत्वञ्च तद्धर्मानुपलब्ध्योः परस्परमसिद्धत्वं स्थितमेव, नैतदेवम्, अन्यतरधर्मानुपलब्धेरेव पक्षधर्मान्वयव्यतिरेकान् पश्यन्नसौ निश्चिततां प्राप्तो न द्वितीयधर्मानुपलब्धेरसिद्धतां बुध्यमानः, अत एवायं भ्रान्तिमूलहेत्वाभासो द्वितीयधर्मानुपलब्धिसिद्धत्वनिश्चये तु सम्यग् हेतुरेव स्यात् । तदसिद्धत्वानवधारणेऽप्यसौ स्वस्य हेतोस्त्रैरूप्यदर्शनान्निश्चितमतिर्भूत्वा साधनं प्रयुञ्जान इतरेण तथैव निश्चितमतिना प्रतियोगे कृते तस्यापि त्रैरूप्यमुपलभमानः संशयमधिगच्छतीत्यलं प्रसङ्गेन । तदेवमसिद्धादिलक्षणवैपरीत्यात् प्रतीत्यनुगुणः प्रकरणसमो नाम सिद्धो हेत्वाभासः ।

अपरे पुनरुदाहरणान्तरमस्य व्याहरन्ति, नित्यः शब्दः पक्षसपक्षयोरन्य-

---

**विशेषानुपलब्धेरप्रत्याख्येयत्वादिति ।** अयमाशयः, उभयधर्मानुपलब्ध्या तावदु-
52 भयोः संशयोऽस्ति, यस्य चोभयधर्मानुपलब्धिः संशयहेतुत्वेनाभिप्रेता स कथमन्यतरधर्मानुपलब्धिः प्रत्याचक्षीत, यो ह्युभयधर्मानुपलब्धिमभ्युपगच्छत्यभ्युपगच्छत्येवासौ अन्यतरधर्मानुपलब्धिमपि, तथा विनोभयधर्मानुपलब्धेरभावादिति

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

तरत्वाद् आकाशवत्, अनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वाद् घटवदिति ।

ननु पक्षसपक्षयोरन्यतरः पक्षो वा स्यात् सपक्षो वा स्यान्न तृतीयो न हि मित्रावरुणयोरन्यतरः सोमो भवितुमर्हति, तत्र पक्षेऽन्यतरशब्दवाच्येऽनन्वयः, न हि शब्दाख्यः पक्षो धर्मी धर्म्यन्तरे वर्तते, सपक्षे त्वन्यतराभिधेये पक्षधर्मता नास्ति, न ह्याकाशादिः सपक्षः शब्दाख्ये धर्मिणि वर्तते ।

उच्यते, न पक्षत्वादिति हेतुः प्रयुक्तः, सपक्षत्वादिति वा येनैवं स्यात्, किन्तु पक्षसपक्षयोरन्यतरत्वादिति। ततश्च द्वयोरपि किमपि साधारणरूपं न हि वरुणो यष्टव्य इति यादृशी बुद्धिस्तादृश्येव मित्रावरुणयोरन्यतरो यष्टव्य इति । विशेषनिष्ठतायान्तु बलादापाद्यमानायां सकलानुमानोच्छेदः । न चान्यतरत्वं शब्दमात्रारोपितरूपमवास्तवमिति वदितुमुचितम् अर्थासंस्पर्शितायाः प्रतिक्षिप्तत्वात् ।

अन्यतरत्वादित्यसिद्धो हेतुरिति चेत् किल पक्ष एवायं न पक्षसपक्षयोरन्यतर इति । तदयुक्तम्, यत एवायं पक्षस्तत एव पक्षसपक्षयोरन्यतरो न ह्यपक्षः पक्षसपक्षयोरन्यतरः स्यात्, न ह्यवरुणो मित्रावरुणयोरन्यतर इत्युक्तमेव । पक्षोऽपि च भवन्नेष न पक्षत्वादित्यनेन रूपेण हेतूक्रियते, किन्त्वन्यतरत्वादितीत्थञ्च हेतूकरणे नैष दोष इति ।

अपरमुदाहरणम्, सन् सर्वज्ञः इतरतद्विपरीतविनिर्मुक्तत्वाद् घटवत् ।

---

**इतरतद्विपरीतविनिर्मुक्तत्वादिति । सत्त्वस्य साध्यत्वादितरतद्विपरीतमसत्त्वम्, तेन विनिर्मुक्तत्वादिति । अन्यत्रापि असन् सर्वज्ञ इत्यत्राप्यसत्त्वं साध्यं तदितरतद्विपरीतं सत्त्वमेवं केचिद् व्याचक्षते । तच्चायुक्तम्,एवं हि सत्त्वात् सन्नित्युक्तं स्यादितरशब्दवैयर्थ्यं च तस्मादेवं व्याचक्षते, सर्वज्ञः सन् कुतः ? इतरतद्विपरीतविनिर्मुक्तत्वात् । इतरो द्वितीयो यः सर्वज्ञ एव तद्विपरीतः सन् सर्वज्ञविपरीतः असन्, तेन विनिर्मुक्तत्वात् तदभावोपलक्षितत्वादित्यर्थः । यदि हि इतरो द्वितीयः कश्चिद् विपरीतोऽसन्नपि सर्वज्ञशब्दवाच्यः सर्वज्ञतया सिद्धः स्यात् तदा असतोऽपि सर्वज्ञतया समुपलम्भात् प्रकृतेऽपि सर्वज्ञतया असत्त्वमासज्ज्येत । नन्वस्ति इतरोऽसन् सर्वज्ञः कश्चित्, अतः सन्नेव सर्वज्ञ इति, यथा इतरेणासता घटशब्दवाच्येन घटेन विनिर्मुक्तो घटः सन्नेव नासन्; यः पुनरसन्नेव सोऽपि इतरेणासता विनिर्मुक्तः, यथा काचिच्छशविषाणव्यक्तिः शशविषाणव्यक्त्यन्तरस्यासत्त्वभूतस्योप-**

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

असन् सर्वज्ञः इतरतद्विपरीतविनिर्मुक्तत्वात् खरविषाणवद् इत्यत्राप्याक्षेपप्रतिसमाधानप्रकारः पूर्ववदनुसरणीयो धर्म्यसिद्धता च यत्नतः परिचिन्तनीया ।

एवंजातीयकन्तूदाहरणं नानुमोदन्ते मतिमन्तः । यत्र हि हेतुना स्वयमर्थं सम्यगसम्यग् वानुमाय प्रमाता परप्रत्यायनाय तं हेतुं प्रयुञ्जीत स प्रयुज्यमानो वस्तुबलप्रवृत्ततया हेतूभवति हेत्वाभासीभवति वा, तथा ह्यारोहपरिणाहवति पुरोऽवस्थिते धर्मिणि स्थाणुगतविशेषानुपलम्भादेकस्य पुरुष इति भवति प्रतीतिरितरस्य तु पुरुषगतविशेषानुपलब्धेः स्थाणुरिति भवति मतिः । एवं यदा असावेकः पुरुषत्वसिद्धये परं प्रति स्थाणुधर्माग्रहणं हेतुत्वेन ब्रूयाद् इतरोऽपि पुरुषधर्माग्रहणेन स्थाणुतां प्रतिष्ठापयन् प्रत्यवतिष्ठते तदा स्वप्रतीत्यनुसरणपुरःसरसाधनाभिधानाद् भ्रान्तिसम्भवाच्च युक्तं तथाविधोदाहरणकीर्तनम् ।

एवं नित्यः शब्दोऽनित्यधर्मानुपलब्धेराकाशवत्, अनित्यः शब्दो नित्यधर्मानुपलब्धेर्घटवदित्यपि द्रष्टव्यम् । यस्तु न वस्तुमूलः, केवलोत्प्रेक्षामात्रावलम्बनः स्वप्रतीतिषु न दृष्टपूर्वः किं तदुपन्यासेन ? एतेन सद्वितीयप्रयोगा अपि प्रत्युक्ताः । यथा क्वचित् साधनप्रयोगे कृते सति तत्रैवं परः प्रत्यवतिष्ठते, यथा प्रस्तुतसाध्यधर्माधिकरणत्वशून्यधर्मिघटान्यतरसद्वितीयो घटः, अनुत्पन्नत्वात् कुड्यवदिति । यथा प्रस्तुतेन सिषाधयिषितेन धर्मेण शून्यो यः प्रकृतो धर्मो घटश्च तयोरन्यतरेण न सद्वितीयोऽयं घटरूपो धर्मी तत्र हेतुरनुत्पन्नत्वं तस्य कुड्यादौ व्याप्तिरिति । सत्यं वदत, यद्यस्ति लोके क्वचिदीदृशः प्रतीतिक्रमः,

---

लम्भान्न सती । एवं द्वितीयप्रयोगे असन् सर्वज्ञः, द्वितीयस्य सत्त्वेन सिद्धस्य सर्वज्ञस्य उपलम्भाद् यदि सन्नपि सर्वज्ञतया सिद्धः स्यात् तत्प्रकृतेऽपि सत्त्वमाशङ्क्येत, न त्वसावस्ति; यथेतरस्य शशविषाणस्य सिद्धस्याभावादसन्नेव शशविषाण इति । **अत्राप्याक्षेपः प्रतिसाधनं चेति** । अत्रापीतरशब्दस्य प्रकृतपरामर्शकत्वात् तेन किं सर्वज्ञस्य परामर्श उत घटस्येत्यन्यतरशब्दवदाक्षेपप्रतिसमाधाने । सत्त्वे च साध्ये 'नासिद्धे भावधर्मोऽस्ति' इत्यादि परिचिन्तनीयम् । किमस्ति न वेति तत्राक्षेपे वाद्यस्तीत्याह, प्रतिसमाधानवादी तु बुद्ध्यारूढस्य बाह्यानुपादानत्वसाधनाद् बौद्धेन च रूपेण सत्त्वान्नास्ति धर्मीत्याह धर्म्यसिद्धतेति ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

घटश्च धर्मो धर्मिघटयोरन्यतरेण सद्वितीय इत्यत्रान्यतरशब्दः सामान्यवचनोऽपि धर्मिणि व्याख्येयः। न हि घट एव घटेन सद्वितीयो भवितुमर्हतीत्यलमलीककल्पनाकौशलप्रख्यापनेन।

सम्यग् वा यदि वान्यथा विदधते ये हेतवः संविदं
दृष्टाः स्वात्मनि ते प्रयोक्तुमुचिताः कामं परज्ञप्तये।
ये तु स्वप्रतिपत्तिमेव न तथा कर्तुं क्षमाः कल्पना-
सामर्थ्योत्थितवस्तुशून्यघटनाः किं तत्प्रयोगे फलम्॥

ये तु सूक्ष्मोत्प्रेक्षणक्षमप्रज्ञातिशयाभिधानदुर्विदग्धास्तथाविधानपि प्रयुञ्जते।

कृतकवचनाचातुर्यं तैः प्रदर्शितमात्मनो
भवति न पुनः शुद्धिः काचित् प्रमेयदिशः कृता।
क्वचिदवसरे त्वेवंप्रायाः परभ्रमकारिणः
किल सफलतां दध्युर्जल्पे यथा कथितं पुरा॥
तत्र त्वेतान् कथयति परः प्राज्ञमानी यदा वा
तस्याख्येयो निपुणमतिना पूर्वनीत्या समाधिः।
द्राघीयस्या तदलमनया तार्किकम्मन्यगोष्ठ्या
हेत्वाभासः प्रकरणसमस्त्वेष निर्णीत एव॥

**असिद्धलक्षणम्**

**साध्याविशिष्टः साध्यत्वात् साध्यसमः॥**

अन्यतरवादिप्रसिद्धमन्यतरं प्रति यत् साधयितुमुपादीयते तत् साध्यम्, तदविशिष्टो हेतुः साध्यसमः। कथं साध्येन तुल्यता हेतोरिति चेदाह साध्यत्वादिति। यथा साध्यमसिद्धत्वात् साध्यं तथा तत्सिद्ध्यर्थमुपात्तो हेतुरपि योऽसिद्धत्वात् साध्यः स साध्याविशिष्टत्वात् साध्यसम इत्युच्यते।

एतच्चान्यतरासिद्धस्यैव लक्षणम्। यथा मीमांसकं प्रत्यनित्यः शब्दः कृतकत्वाद् घटवदिति। न चाक्षुषत्वादेरुभयासिद्धस्य, न हि तस्य साध्यत्वं सम्भवतीत्यर्थः।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

सकलासिद्धभेदसङ्ग्रहाय साध्यत्वादित्येतत्पदरहितं साध्याविशिष्ट इत्येवासिद्धलक्षणमुपवर्णनीयम् । साध्यस्य च रूपद्वयस्यासिद्धत्वं साध्यत्वञ्च तत्रासिद्धत्वमेव । तदविशिष्टत्वकारणमिहाश्रीयते सर्वासिद्धभेदसाधारणम्, न तु साध्यत्वमन्यतरासिद्धैकलग्नमिति । एवञ्चासिद्धत्वमेवासिद्धस्य लक्षणमुक्तं भवति । पक्षधर्मत्वं यस्य नास्ति साध्ये धर्मिणि यो न वर्तते हेतुः सोऽसिद्ध इति ।

**असिद्धभेदाः**

तस्य तु भूयांसो भेदा भवन्ति । हेतुस्वरूपे तावदन्यतरस्य वादिनो द्वयोर्वा अज्ञानं सन्देहो विपर्यय इति । तथा तदाश्रयेऽपि धर्मिण्येकस्य वा द्वयोर्वा तथैवाज्ञानसन्देहविपर्यया इति । भूयसि च पक्षीकृतेऽर्थे तदेकदेशे क्वचिद् वृत्तिस्तदितरत्रावृत्तिरिति । एकदेशवृत्तावपि द्वयोरेकस्य वा तथैवाज्ञानसंशयविपर्यया इति । एवंप्रकारभेदोदाहरणवर्णनमल्पप्रयोजनमिति न प्रस्तूयते ।

अन्यतरासिद्धेर्न विवदन्ते प्रमाणस्यापक्षपातित्वात्, यदि तावत् कृतकत्वं शब्दे प्रमाणतो निर्णीतं तर्हि मीमांसकस्यापि तार्किकस्येव तत् सिद्धमेव । अथ तत्र कृतकत्वनिश्चयनिपुणं नास्त्येव प्रमाणं तदा तार्किकोऽपि तूष्णीमास्ताम्, द्वयोरप्यसौ चाक्षुषत्वादिवन्न सिद्धचेद् हेतुः । वाङ्मात्रेण त्वसिद्धिकथनमसाम्प्रतमतिप्रसङ्गादेव ।

---

**हेतुस्वरूपे तावदन्यतरस्य वाचिनो द्वयोर्वा अज्ञानं सन्देहो विपर्यय** इति । अज्ञानमसिद्धत्वं यथा अनित्यः शब्दः कृतकत्वादिति, कृतकत्वे मीमांसकस्यासिद्धता । अनित्यः शब्दश्चाक्षुषत्वादित्युभयासिद्धिः । किमयं बाष्पो धूमो वेति हेतुत्वेनोपादीयमानो द्वयोरेकस्य वा संदिग्धः । वह्निर्न दाहकः शैत्यात्, अनित्यः शब्दोऽश्रावणत्वादित्युभयोर्विपर्ययः । **तथा तदाश्रयेऽपि धर्मिण्येकस्य वे**ति । आत्मा धर्मी सर्वगत इति साध्यं सर्वत्र दृष्टकार्यत्वादित्यत्र हेत्वाश्रये आत्मनि अज्ञानं बौद्धस्य, लौकिकानां तु संशयः । अस्मिन्नेव बौद्धेन चार्वाकं प्रत्युक्तम् उभयोरज्ञानम् । **तदेकदेशे क्वचिद् वृत्तिः** । यथा नित्याः परमाणवो गन्धवत्त्वादिति । गन्धवत्त्वस्य पार्थिवेषु परमाणुषु वृत्तिस्तदितरत्र आप्यादिष्ववृत्तिः । **एकदेशवृत्तावपि द्वयोरेकतरस्य वे**ति । यथात्रैव योगाचारस्याज्ञानं तस्य परमाणूनाम-

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

सत्यम्, एवं न सर्वदान्यतरासिद्धस्य हेत्वाभासत्वमभिदध्महे; किन्तु कञ्चित् कालमिति, यदैकेन वादिना हेतौ प्रयुक्ते द्वितीयो वदति सम्प्रति न सिद्ध एष इति तदा हेतोः प्रयोगाद् विना तत् साधनमभिधेयम्; अनभिधानात् स पराजीयते। साधने तु तेनोक्ते तदसिद्धतोद्भावनवादी पराजीयते इति। यावत् तत्सिद्धौ नोपन्यस्तं साधनं तावदेव असावन्यतरसिद्धयनन्तरन्तु सम्यग् हेतुरुभयासिद्धो वा भविष्यतीति।

व्यधिकरणासिद्धस्तु यथोक्तभेदान्तर्गत एव, यथा नित्यः शब्दः काकस्य कार्ष्ण्यादिति। क्वचित् पुनश्च व्यधिकरणासिद्धोऽपि भवति गमक इत्येके। तद् यथा बहलबहलः प्रचलजलधरश्यामलवपुरम्बरतलमाक्रामन् धूमप्रबन्धः क्षोणीध्रकन्दरादिविशेषधर्मत्वानवधारणेऽपि तत्र गमयितुमलमनलमिति। यथा वा अग्निमानेष देशो धूमोपलब्धेरिति प्रयुज्यते तदोपलब्धेरात्मधर्मतया वैयधिकरण्येऽपि गमकतास्तीति।

---

सिद्धत्वादिति, तस्य माध्यमिकं प्रत्येवं ब्रुवत उभयोरज्ञानं लौकिकानां तु संदेहः, कस्यचिद् विपर्यय इति। पदासिद्धाद्यपेक्षया वा अज्ञान-संदेह-विपर्यया व्याख्येयाः। यथाह भट्टः,

अलक्षणमसिद्धं च पदाभासं स्वगोचरम्।
सिद्धपोषधविज्ञप्तिपश्यनादि प्रकल्पयेत्॥
हेतौ विवक्षिते तत्र पदासिद्धोऽभिधोयते।
अन्यस्य वाचको यत्र शब्दोऽन्यत्र प्रयुज्यते॥
तत्रासिद्धाभिधो हेतुर्विज्ञाने कायशब्दवत्।
प्रामाण्यं बुद्धवाक्यादेः सर्वज्ञोक्ततया यदा॥
साध्यते तत्र हेत्वर्थस्वरूपासिद्धता मता॥ इत्यादि।

यत्र सङ्कोचप्रसिद्धयोगत्वाच्चेतनास्तरवो जङ्गमशरीरवत्, चतुर्दश्यां हलेष्वयोजनं वृषाणां धर्मः पोषधत्वाद् यवसादिदानवदित्यादौ सिद्ध-पोषध-विज्ञप्ति-पश्यनादि-पदानां साधनप्रतिपादकत्वेन प्रयुक्तानां पदासिद्धताव्यपदेशः। तत्र बौद्धसिद्धान्तसमाश्रयणेन प्रयुञ्जानस्य वादिन एव स्वाज्ञान-संदेह-विपर्ययाः, प्रतिवादिनस्तु बौद्धस्याज्ञानमेव, बौद्धेन वा प्रयुक्तेषु प्रतिवादिनोऽज्ञानादय इति।

**एवंप्रकारभेदोपवर्णनमल्पप्रयोजनमिति। तथा च प्रकारभेदानाह भट्टः,**



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

**अन्यथासिद्धस्यासिद्धभेदरूपतेति शङ्का तत्समाधानञ्च**

अन्ये त्वन्यथासिद्धत्वं नाम तद्भेदमुदाहरन्ति । यस्य हेतोर्धर्मिणि वृत्तिर्भवन्त्यपि साध्यधर्मप्रयुक्ता भवति न सोऽन्यथासिद्धो यथा अनित्या मनः-परमाणवो मूर्तत्वाद् घटवदिति ।

ननु कथमयमन्यथासिद्ध उच्यते, किमिति सम्यग् हेतुरेव न भवति, किं परमाणुषु मूर्तत्वं न वर्तते, किं घटादावनित्यतया व्याप्तं न दृश्यते, किमाकाशादेः खपुष्पादेर्वा विपक्षान्न प्रच्यवते ? किं प्रत्यक्षेणागमेन वा बाध्यते, किं प्रतिपक्षेण प्रतिबाध्यते येनाभासतां प्रतिभजते ? न, प्रतिबन्धाभावात् ।

ननु पञ्चानां प्रतिबन्धलक्षणानां कतमदस्य श्लथीभूतम् ? नान्यतमस्यापि शैथिल्यं ब्रूमः । तत् किं पञ्चस्वपि लक्षणेषु प्रतिबन्धः समाप्यते ? तानि चासां सन्त्येव, न चैष प्रतिबन्ध इति कैतवम् ।

उच्यते, प्रयोज्यप्रयोजकभावेन साध्यसाधनधर्मयोर्धूमाग्निवत् प्रतिबन्धोऽवधार्यते, स चात्र प्रयोज्यप्रयोजकभावो नास्तीत्यत एवायमन्यथासिद्धोऽप्रयोजक इति कथ्यते ।

कथं पुनरस्याप्रयोजकत्वमवगतम् ? उच्यते, मूर्तत्वं हि सर्वगतेतरद्रव्यपरिमाणविशेषादिधर्मो वस्तुस्वभावमात्रनिबन्धनो न कृतकत्वादिवदनित्यतां

---

पदासिद्धादयस्त्रेधा भिद्यन्ते वाद्यपेक्षया ।
कश्चिद्धि वादिनोऽसिद्धः कश्चिद्धि प्रतिवादिनः ॥
उभयोरपि कश्चित्तु सोऽपि भिन्नः पुनस्त्रिधा ।
प्रत्येकाज्ञानसंदेहविपर्यासनिरूपणात् ॥
वादिना कश्चिदज्ञातस्तथान्यः प्रतिवादिना ।
उभाभ्यामपरस्तद्वत् तत्संदेहविपर्ययौ ॥
संदिग्धो वादिनो वा स्यादज्ञातः प्रतिवादिनः ।
तथैकस्य पदासिद्धस्तदाज्ञानादिभिस्त्रिभिः ॥

इत्यादि वितायमानं ग्रन्थगौरवमावहतीत्यलम् ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

प्रयोक्तुमुत्सहते । तथा हि परमाणुषु सिद्धेषु सत्सु तत्र वर्तमानं मूर्तत्वमनित्यतां साधयेत, अन्यथा त्वाश्रयासिद्धतामुपेयात् । सिध्यन्त एव सावयवकार्यानुमानमार्गेण, लोष्टविभागावभासमानभागपरम्परापरिकल्पनक्रमेण वा परमाणवो निरवयवाः सिध्यन्ति । सावयवत्वे तदवयवाः परमाणवो भवेयुर्न ते, तेषामप्यवयवान्तरपरिकल्पनायामप्यवयवानन्त्यविशेषात् सर्षपस्य मेरोश्च साम्यमापद्यते, न च तदस्ति । तदेवं निरवयवेषु परमाणुषु निसर्गसिद्धमनाश्रितत्वम् । अतश्चाश्रयविनाशावयवविभागादिविनाशकारणाभावात् स्वाभाविकविनाशवादनिराकरणाच्च कथं परमाणूनां नित्यतां स्पृशेत् ? मूर्तत्वन्तु वस्तु धर्मत्वाद् भवदपि प्रमेयत्वादिवन्न प्रयोजकम् ।

इयांस्तु विशेषः, प्रमेयत्वमुभयपक्षस्पर्शादनैकान्तिकं भवदप्रयोजकम् । इदन्तु मूर्तत्वमनित्यव्यतिरिक्तवस्त्वन्तरपरिचयविरहितमपि न प्रयोजकमिति ।

नन्विदमपि प्रमेयत्ववद् विपक्षवृत्त्येव मूर्तत्वम् ? क्व विपक्षे वर्तते ? परमाणुष्वेव ? ननु तेषां पक्षीकृतत्वात् कथं विपक्षता, न पुरुषेच्छानुरोधेन वस्तु विपरिवर्तते ? विपक्षो हि नाम स उच्यते यः सिषाधयिषितधर्माध्यासिततया दृढप्रमाणासिद्धः । परमाणवश्चैतेऽनन्तरनिर्दिष्टनीतिक्रमेणानिर्णीतनित्यत्वाः परमार्थतो विपक्षा एवानित्यत्ववादिनः, स तु रागद्वेषकलुषितहृदयतया यदि तान् पक्षतया ब्रवीति ब्रवीतु नाम, न तु सुस्पष्टासिद्धनित्यतानां परमाणूनां विपक्षभावो निवर्तते इति ।

तदिदमनुपपन्नम्, अनेन क्रमेण धूमानुमानस्याप्यनैकान्तिकत्वप्रसङ्गात् । धूमो हि महीभृति हुतवहविरहितवपुषि विपक्षे वर्तत एव । न तत्र चित्रभानोरभावो निश्चित इति चेत्, किन्नु खलु सद्भावोऽस्य तत्र गृहीतः ? तथा सति वा कृतमनुमानेन ।

अथ सत्त्वमसत्त्वं वा नावधारितमेव धराधरे धूमकेतोः ? तर्हि सन्दिग्धा

---

**सिध्यन्त एव च सावयवकार्यानुमानमार्गेणेति । तत्र यावत् कार्यजातस्य प्रत्यक्षेण ग्रहणम्, तत्र तदेव प्रमाणम्, तत ऊर्ध्वमनुमानम्; तदपि हि 'कार्यं स्वावयवाश्रितम्, सावयवत्वात् परिदृश्यमानकार्यवत्' इत्यादिना अष्टमाह्निकेऽनुमानं प्रतिपादितम् ।**

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

तत्र विपक्षता, निश्चितविपक्षवृत्तिवत् संशयितविपक्षवृत्तिरपि नानैकान्तिकतामतिवर्तेत इति सर्वानुमानानामेव निवापाञ्जलिर्दत्तः स्यात् । न च वादिहृदयपरिकल्पनोपारूढस्थितेरपि पक्षो नाम नास्ति, तदभावे किमपेक्षः सपक्षविपक्षव्यवहारः ? बुद्ध्यारूढत्वपक्षेऽपि न सपक्षविपक्षयोः पक्षत्वम्, न च वस्तूनामुभयात्मकता भवेत्; किन्तु कञ्चित् कालमन्यतरासिद्धवद् विमतिपथापतितस्य वस्तुनः पक्षत्वमुपेयते, निर्णयजन्मना तु विमतिविरतौ नूनमन्यतरवर्गपतितोऽसौ भविष्यतीति सर्वथा न तस्यां दशायां तेनानैकान्तिकत्वोद्भावनं युक्तम् ।

नन्वनेन पथा पृथक्कृते सपक्षविपक्षाभ्यां पक्षे न तत्रान्वयव्यतिरेकयोरन्यतरस्यापि ग्रहणं भवेत् । सपक्षे ह्यन्वयो गृह्यते विपक्षे च व्यतिरेकः । एष तु ताभ्यामर्थान्तरमिति तत्रागृहीतान्वयव्यतिरेकात्मकनियमो हेतुः षण्ढ इव न पुत्रजन्मनि समर्थ एव साध्यसाधने भवेत् । अलमनया डिम्भविभीषिकया । न हि सकलसपक्षविपक्षसाक्षात्करणकेकोल्लासपुरःसरं व्याप्तिग्रहणमिति पूर्वमेव निर्णीतोऽयमर्थः, न च तद्वर्जमिति व्याप्तिग्रहणं भवति, येन षण्ढसुतसाम्यचोदनावकाशः स्यात् । सामान्येन हि व्याप्तिर्गृह्यमाणा तत्रापि गृहीता भवत्येव, तेनापि च कालान्तरे सपक्षविपक्षान्यतरवर्गानुप्रवेशिना भवितव्यमेव । विमत्यवस्था, या तु पृथगेव ताभ्यामसाविति न तत्र वर्तमानो हेतुरनैकान्तिकीभवति । एतेनेश्वराद्यनुमानानामप्यनैकान्तिकत्वमपाकृतं वेदितव्यम् । तस्मान्नानैकान्तिकत्वेनागमकं मूर्तत्वमपि त्वन्यथासिद्धत्वेनैवेति ।

नन्वेवमपि परमाणुप्रसाधनानुमानमहिमहतशक्तितया मूर्तत्वमनित्यत्वसिद्धावक्षमं जातमिति । ततश्च कालात्ययापदिष्टत्वान्नान्यथासिद्धतामधिगच्छेत् ।

नैतदेवम्, कालात्ययापदिष्टो हि प्रत्यक्षागमापहृतविषय उच्यते । अनुष्णः कृष्णवर्त्मा, मदिरा द्विजैः पातव्या इत्यादौ दर्शितः । यत्पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः स इति । न च परमाणुषु परमाणुतयैव सततपरोक्षेषु प्रत्यक्षम् अनित्यताविपर्ययग्राहि प्रवर्तितुं शक्तम्, आगमस्तु नास्त्येवेति कुतः कालात्ययापदिष्टता ?

ननु किमिदम् अवनिपतिवचनम् उत वैदिकी चोदना, यत् प्रत्यक्षागमयोरेव बाधकत्वमनुमानं प्रति नानुमानान्तरस्येति । परमाणुप्रसाधनानुमानं

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

हि दृढम् अदृढस्य तदनित्यतानुमानस्य मूर्तत्वादेर्यदि बाधकं स्यात् को दोषः स्यादिति ।

अथ मनुषे, नियम एवैष प्रत्यक्षानुमानयोर्विरोधे प्रत्यक्षमेव बलीय इति तदेवानुमानस्य बाधकमुचितं नानुमानान्तरमिति । तदसत्, अलातचक्रादौ प्रत्यक्षमप्यनुमानेनानन्यथासिद्धेन बाध्यत एव, ननु भ्रमणविरतौ परिमितपरिमाणोल्मुकग्राहि प्रत्यक्षमेव तत्र प्रत्यक्षस्य बाधकं नानुमानमिति, मैवम्, अनवरतपरिभ्रमणसमुद्भूतचक्रावभाससमय एवानुमानेन तद्भ्रान्ततानिश्चयात् ।

पूर्वप्रवृत्तमचक्राकारतदलातपरिच्छेदि प्रत्यक्षं बाधकमिति चेत्, न, पूर्वप्रवृत्तत्वेनैवातिक्रान्तत्वात्, तस्मादनुमानमेव चक्रज्ञानबाधकम् । एवञ्चानन्यथासिद्धमनुमानमपि प्रत्यक्षस्य बाधकं भवति । यच्चानन्यथासिद्धतया मूलस्तम्भभूतमखिलानुमानप्रतिष्ठायतनं प्रत्यक्षमपि बाधते तदनुमानस्य तपस्विनः कथं न बाधकम्? अतश्च प्रत्यक्षागमग्रहणस्योपलक्षणार्थत्वादनुमानं बाधितमपि कालात्ययापदिष्टमेवेति ।

तदेतदसमीचीनम्, अनुमानादेर्बाध्यबाधकभावानुपपत्तेः । सर्वत्र खलु प्रमाणाभासरूपं बाध्यते न तु प्रमाणं नाम शक्यते बाधितुम् । अलातचक्रादावपि प्रत्यक्षाभासस्य बाधकमनुमानं न प्रत्यक्षस्य, एवमत्राप्यनुमानाभासस्य बाध्यता नानुमानस्य, तदिदानीमनुमानाभासत्वमस्य किंकृतमिति चिन्त्यताम् । स्वलक्षणवैधुर्यादिति चेत्, किमनुमानान्तरेण बाधकेन । तद्बाध्यतया तु तदाभासत्वकथनमितरस्यापि तादृशमेव । परमाणुषु प्रसाधनानुमानमनन्यथासिद्धमिदन्तु मूर्तत्वमन्यथासिद्धमिति चेत्, आगतोऽसि मदीयं पन्थानम्, अन्यथासिद्धत्वादेव च तदप्रामाण्ये सिद्धे किं तद्बाधया । अन्यथासिद्धत्वमेव कथमिति चेत्, न घटादौ मूर्तत्वप्रयुक्तमनित्यत्वम् अपि तु कार्यत्वप्रयुक्तम् । कार्यस्य कारणविभागाद् वा तद्विनाशाद् वा विनाशोपलब्धेः कार्यत्वमेवानित्यत्वप्रयोजकमुक्तं न मूर्तत्वम् । मूर्तत्वे तु नित्यताक्षेपिणि परमाणुतैव हीयेतेत्युक्तम् । तस्मान्न मूर्तत्वमनित्यतायाः कारकं ज्ञापकं वेति भवत्यन्यथासिद्धम् ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

भवत्वेवम्, असिद्धवर्गे तु कथमेष हेतुर्गण्यते ? साध्यधर्मप्रयुक्ता धर्मिणी वृत्तिरस्य नास्तीति चेत्, यद्येवं पञ्चानामपि तत्प्रयुक्तवृत्तिरहितत्वादसिद्ध एवैको हेत्वाभासः स्यात् ।

अथ सत्यपि प्रयोजकत्वे विपक्षवृत्त्याद्यवान्तररूपभेदनिबन्धनानैकान्तिकत्वादिव्यपदेशपञ्चकभाज इमे हेत्वाभासा इष्यन्ते, हन्त तर्हि प्रकृतोऽयं हेतुर्मूर्तत्वादिति किमनैकान्तिक उच्यतामथ कालात्ययापदिष्ट आहोस्विद् विरुद्ध उत प्रकरणसम इति ? नैषामन्यतमोऽपि वक्तुं शक्यते एतल्लक्षणानुपपत्तेरिति चेत्, काममसिद्धोऽपि मा वादि, पक्षे वर्तमानत्वेन तल्लक्षणस्यानुपपत्तेरिति । आस्तां तर्हि षष्ठ एवायं हेत्वाभासः, सम्यग् हेतुतां तावद् यथोक्तनयेन नाश्नुत एव, न च तेष्वन्तर्भवतीति, बलात् षष्ठ एवावतिष्ठते ।

कथं विभागसूत्रमिति चेत्, अतिक्रमिष्याम इदं सूत्रम् । अनतिक्रामन्तः सुस्पष्टदृष्टमपीममप्रयोजकं हेत्वाभासमपह्नुवीमहि, न चैवं युक्तमतो वरं सूत्रातिक्रमो न वस्त्वतिक्रम इति ।

अथ वा न सूत्रकारनियमोल्लङ्घनं श्रेयः । प्रमाद्यन् खलु परिमितदर्शी मादृशोऽन्यथा ब्रूयात्, न न्यायमहोदधेः पारदृश्वा भगवानक्षपादः । तदेनं हेत्वाभासमसिद्धवर्ग एव निक्षिपामः ।

ननु पक्षे वर्तमानः कथं तत्र निक्षेप्तुं शक्यते । यथा साध्यधर्मप्रयोजकतयापक्षेऽपि वर्तितुं युक्तम्, तथा न वर्तत एवायं तत्रेत्यदूरविप्रकर्षेण भवत्येवायमसिद्धः । अत एवायमन्यथासिद्ध इत्युच्यते । यथा सिद्धः सिद्धो भवति तथा न सिद्धः अन्यथा तु सिद्ध इत्यनया नीत्योत्तानवृत्तिमात्रलम्भेऽप्ययमसिद्ध एव । अन्येषु तु हेत्वाभासेषु भङ्ग्यापि नान्तर्भवतीत्युक्तमेतत् । अथ वा सर्वहेत्वाभासानुवृत्तमिदमन्यथासिद्धत्वं नाम रूपमिति न षष्ठोऽयं हेत्वाभासः । तत्तु क्वचित् केवलमेव दृश्यते क्वचिद् व्यभिचारादिरूपान्तरसहचरितम्, अतश्च व्यभिचारादिरूपापेक्षमेव पञ्चत्वमुपदिष्टवान् मुनिरिति न विभागसूत्रविरोध इत्यलमतिविस्तरेण ।

---

**तत्तु क्वचित् केवलमेव दृश्यत इति । यत्र केवलं दृश्यते तत्रासिद्ध एवान्तर्भाव इति भावः ।**

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

युक्तस्तस्मादन्यथासिद्धनामा हेत्वाभासः सोऽयमेकप्रकारः ।
यस्योत्ताना विद्यमानापि पक्षे वृत्तिर्न स्यात् साध्यधर्मप्रयुक्ता ।।
हेत्वाभासकुटुम्बकस्य तदिदं सर्वस्य साधारणं
रूपं यद्यपि लक्षणान्तरकृतो भेदस्तथा नान्यतः ।
सामान्यन्तु विशेषरूपरहितं नास्ति प्रमाणं यथा
मा भूदत्र तथेति नास्य विषयश्चोद्यस्य वस्तुस्थितिः ।।

**बाधलक्षणम्**

**कालात्ययापदिष्टः कालातीतः ।।**

यथाप्राप्तं हेतुप्रयोगकालमतीत्य यो हेतुरपदिश्यते स कालात्ययापदिष्टः कालातीत इत्युच्यते ।

तत्र केचिदाचक्षते, प्रतिज्ञानन्तरं हि हेतुः प्रयोक्तुं युक्तः, तत्र यः प्रतिज्ञायाः पूर्वमेव दृष्टान्तवचनादेरप्यूर्ध्वं वा प्रयुज्यते स कालात्ययापदिष्ट इति, तदनुपपन्नम् ।

अक्षतप्रतिबन्धस्य साध्यावगतिकारिणः ।
क्रमातिक्रममात्रेण न हेत्वाभासता भवेत् ।।

कियांश्चैष दोषः ? पदान्तरव्यवहितोच्चारणं नाम, व्यवहितमपि येन सह समुचितसमयमन्वेतुमधिकृतमितरदतिनिकटपठितमपि पराणुद्य दवीयसापि तेनैव सम्बन्धमनुभवति । यथा,

अयसा पथि गच्छन्तीमोषधीं दीर्घलोचनाम् ।
दृष्टवानसि केदारं यो लुनासि मम प्रियाम् ।। इति ।

---

**सामान्यं तु विशेषरूपरहितमिति ।** यथा प्रमाणेषु न प्रत्यक्षादि विशेषशून्यमन्यत् प्रमाणं पञ्चममस्ति तथात्रापि विरुद्धादिविशेषरूपशून्यं कथमन्यथासिद्धं सामान्यभूतं पृथग् हेत्वाभासो भवेदिति, एवंविधस्य चोद्यस्य वस्तुस्थितिर्न विषयः; वस्तुस्वभावोऽयं यद् विशेषरहितमपि सामान्यं दृश्यत इत्यर्थः ।

**अयसा पथि गच्छन्तीमिति ।** यस्त्वमयसा ओषधीं लुनासि स त्वं मम प्रियां दृष्टवानिति सम्बन्धः । किंभूताम् ? पथि गच्छन्तीं दीर्घलोचनां च ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

अप्राप्तकालमेव तत् कथितं पृथगेव निग्रहस्थानम् । तच्च पुनरुच्यमानं न कञ्चन स्वार्थमावहति तस्मादपव्याख्यानमेतत् ।

अपर आह, सविशेषणस्य हेतोः प्रयुज्यमानस्य यस्य विशेषणं कार्यकालमत्येति न तत्पर्यन्तमवतिष्ठते स कालात्ययापदिष्ट इति । यथा कालान्तरस्थायी शब्दः संयोगव्यङ्ग्यत्वाद् रूपवदिति । अत्र न व्यङ्ग्यत्वमात्रं हेतुत्वेन विवक्षितम्, अपि तु सविशेषणं संयोगव्यङ्ग्यत्वम् । स चायं संयोगो व्यञ्जके दृष्टान्तधर्मिणि रूपे तदवगतिपर्यन्तस्थितिरुपलभ्यते दीपादिसंयोगः, साध्यधर्मिणि तु शब्दे न तदवस्थानमिति । दूरतो हि दारुपरशुयोगविच्छिन्ने छेत्रा पुनरुद्यम्यमाने परश्वधे श्रूयते शब्द इति तदुपलब्धिकाले तदत्ययात् कालात्ययापदिष्टोऽयं हेतुरिति । एतदपि न सङ्गतमसिद्धत्वेनास्य हेत्वाभासान्तरत्वानुपपत्तेः ।

तस्मादयमर्थः, हेतोः प्रयोगकालः प्रत्यक्षागमानुपहतपक्षपरिग्रहसमय एव, तमतीत्य प्रयुज्यमानः प्रत्यक्षागमबाधिते विषये वर्तमानः कालात्ययापदिष्टो भवति । तस्योदाहरणं पूर्वमेव प्रदर्शितम् ।

उष्णो न तेजोऽवयवी कृतकत्वाद् घटादिवत् ।
ब्राह्मणेन सुरा पेया द्रवत्वात् क्षीरनीरवत् ।।
यच्च किञ्चिदभिधेयमत्र तत् सर्वमुक्तमनुमानलक्षणे ।
अप्रयोजकनिरूपणे पुनः किञ्चनोदितमतो विरम्यते ।।
हेत्वाभासास्त एतेऽवगतिनियमितानन्यसङ्कीर्णरूपा
निर्णीताः पञ्च येऽर्थे विदधति महतीं शुद्धिमभ्यस्यमानाः ।
पक्षादौ वृत्तिभेदाकलनगुरुतरक्लेशनिष्पद्यमाना
नेयत्ता त्वेतदीया क्वचन फलवती नादृता तेन तज्ज्ञैः ।।

---

**अवगतिनियमितानन्यसङ्कीर्णरूपा** इति । अनन्यसङ्कीर्णमेषां परस्परं रूपमित्यत्र किं प्रमाणमिति चेत् तदाह, अवगतिनियमितेति । रूपमेषामुपलभ्यमानं यतः परस्परासङ्कीर्णमवगम्यते तथा सिद्धमेव तेषां रूपमसङ्कीर्णमित्यर्थः ।

**पक्षादौ वृत्ति....** पक्षैकदेशवृत्तिरयं तु पक्ष........इत्यादिना वृत्तिभेदेन । छलस्तु एव........अन्यथासिद्धात्माविशेषनिष्ठम् ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

## छलप्रकरणम्

तत्त्वाध्यवसायसंरक्षणं जल्पवितण्डयोः प्रयोजनमुक्तम्। तदङ्गभूतानि च्छलजातिनिग्रहस्थानानि। यद्यपि च वादे केषाञ्चिदभ्यनुज्ञानमस्ति तथापि जल्पवितण्डे एव तेषां प्राचुर्येण क्षेत्रमिति तदौपयिकतया तत्स्वरूपनिरूपणं युक्तमित्युद्देशक्रमेणच्छलस्य तावल्लक्षणमाह,

**वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥**

छलस्य भेदवत्त्वात् सामान्यलक्षणानि च वक्तव्यानि। तानीह सर्वाणि स्वकण्ठेन किल 'तत्पूर्वकमनुमानम्' इत्यत्र त्रिचतुराक्षरसमर्पितापरिमितविषय-वितण्डानुमानलक्षणलब्धनिरतिशयसूत्रकरणकौशलस्य मे किमधुना शिष्यजन-मनःक्लेशकारिणा संक्षिप्ताभिधानदोहदेनेति मन्यमानः सूत्रकृदुक्तवान्। तत्र 'वचनविघात इति सूत्रं सामान्यलक्षणप्रतिपादकम्'। परस्य वदतो वचन-विघातोऽभिधाननिरोधश्छलम्। किमास्यपिधानादिना? न, इत्याह 'अर्थ-विकल्पोपपत्त्या' इति। वक्तुरनभिप्रेतमर्थात् तदुक्ते वचसि समारोप्य तन्निषेधं छलवादी करोति। कथमर्थान्तरारोपणमिति चेत्, अर्थविकल्पोपपत्त्या विकल्पमानार्थघटनयेत्यर्थः।

किमुदाहरणम्? विशेषलक्षणेषु वक्ष्यामः। इहैव कस्मान्नोच्यते? असम्भवादिति ब्रूमः। न हि निर्विशेषं सामान्यमुपपद्यत इति तदुदाह्रियमाणं बलाद् विशेषनिष्ठमेवावतिष्ठते। अन्येष्वपि गौर्न पदा स्प्रष्टव्येति सामान्योपदेशेषु नामूर्त्तायामाकाशनिर्विशेषवपुषि जातौ स्पर्शप्रसक्तिस्तन्निषेधो वा कल्पते, किन्तु व्यक्तिष्वेवेति विशेषविषय एव सर्वत्र क्रियायोग इति तत्रैवोदाहरण-वर्णनं युक्तम्।

कथं तर्हि सकलहेत्वाभाससार्थसामान्यलक्षणमप्रयोजकमनपेक्षित-सव्यभिचारविरुद्धादिविशेषमप्युदाहरणद्वारेण दर्शितम्, अनित्याः परमाणवो मूर्तत्वाद् घटवदिति।

उच्यते, प्रमाणे तर्हि प्रत्यक्षादिविशेषनिरपेक्षं कथं प्रमाणसामान्यं नोदाहृतम्? न च तत्सामान्यादन्यत्रापि तथास्त्विति वक्तव्यम्, न हि चाक्षुषेण



CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

पञ्चाशद् भवितुमर्हति, तस्मान्नैवं वक्तुं शक्यम् । यथा विरुद्धादिविशेषरूपरहितमप्रयोजकत्वं हेत्वाभासे सामान्यरूपं दृश्यते तथा प्रमाणेष्वपि प्रत्यक्षादिविशेषरूपरहितं तद् दृश्यताम्, यथा वा प्रमाणेषु तन्न दृश्यते तथा हेत्वाभासेष्वपि मा दर्शीति वस्तुस्वभावानामनुयोगक्षेत्रतानुपपत्तेः ।

अपि चाप्रयोजकत्वं सामान्यं विरुद्धादिविशेषेष्विव तद्रूपरहितेषु स्वविशेषेष्वपि सम्भवद् दृश्यते । अत एव तदपि स्वविशेषनिष्ठमेवोदाहृतम्, अनित्याः परमाणवो मूर्तत्वादिति, न त्वाकाशवदनवलम्बनमेव किंचित् प्रयोजकत्वसामान्यमिति, तस्मात् सुष्ठूक्तं न सामान्यलक्षणे शक्यमुदाहर्तुमिति ।

**छलविभागः**

एवं सामान्यलक्षणमभिधाय छलस्य विभागमाह,

**तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलञ्च ।।**

निगदव्याख्यातं सूत्रम् । विभागसामान्यलक्षणयोश्चोपदेशपौर्वापर्यनियमो नास्तीति पूर्वमेवोक्तम् ।

**वाक्छललक्षणम्**

अथ विभागक्रमेण विशेषलक्षणान्याह,

**तत्राविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ।।**

सम्भवद्विशेष्यविशेषणसाधारणार्थसमर्पणकौशलशालिनि श्लेषालङ्कारवति शब्दे प्रयुक्ते सति वक्तुरभिप्रेतमर्थमपह्नुत्य ततोऽर्थान्तरं परिकल्प्य तन्निषेधवचनं वाचि निमित्तभूतायां छलं वाक्छलम् ।

नवकम्बलोऽयं माणवक इति नवः कम्बलोऽस्य नव कम्बला अस्येति च विग्रहदृशा दृश्यमानविशेषमपि समासपदमिदमर्थद्वयेऽप्यविशिष्टम् । तत्राभिनवकम्बलयोगं वक्तुरभिप्रेतं प्रमाणोपपन्नञ्च निह्नुत्य नवसंख्यासम्बन्धमध्यारोप्य तत्प्रतिषेधेन परः प्रत्यवतिष्ठते कुतोऽस्य नव कम्बला इति । तदेतत् साधारणशब्दे वाचि छलं वाक्छलमिति । यथा च कस्याञ्चिदवस्थायां जल्पादौ छलादिप्रयोगो युक्त इति तद्व्युत्पादनम् । एवं परप्रयुक्तस्यापि सतश्छलादेः प्रतिसमाधानमभिधेयमिति तदपि व्युत्पाद्यते ।

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

नव कम्बला अस्येति मम विवक्षितमिति कुतः प्रतिपन्नमायुष्मता ? किमयमभिनवकम्बलयोगप्रतिपादको न भवत्येव ? बहुव्रीहिः पक्षद्वयेऽपि च सम्भवति, यदि तावदर्थप्रकरणादिसामर्थ्यपर्यालोचनयावसितनियताभिधेयवृत्तिशब्दव्यवहाराभिज्ञोऽसि तदर्थसिद्धमर्थमभिनवकम्बलसम्बन्धमेव बुद्ध्वा तूष्णीमास्स्व ।

अथ शुष्कतार्किककुटुम्बकगर्भदास इव शब्दवृत्तानभिज्ञ एव त्वम्, तर्हि पक्षद्वयसम्भवे संशयानो मामेव पृच्छ किं ते विवक्षितमिति निषेधकः सन् वक्तुमुपक्रमसे ।

ननु त्वमप्यक्षप्राप्त्यादिफलपर्यन्तशब्दप्रयोगप्रवृत्तः किमिति साधारणमिदम् अन्धपदप्रायं वचः प्रयुङ्क्षे ?

अयि बालिश ! तवैतद् अन्धपदम्,

अर्थप्रकरणाधीननियतस्वार्थवृत्तिताम् ।
यो न जानाति शब्दानां स एवमपभाषते ॥
इदमर्थद्वये तावत् साधारणपदं भवेत् ।
जातिशब्दाः पुनर्व्यक्तिसहस्राक्षेपकारिणः ॥
स्पृशन्ति नियतं वाच्यं तेऽपि प्रकरणादिना ।
ब्राह्मणान् भोजयेत्यादौ तद् बालेन न शिक्षितम् ॥
तस्माच्छब्दार्थसन्देहे प्रयोक्ता वत्स ! पृच्छ्यते ।
न त्वर्थान्तरमारोप्य तन्निषेधो विधीयते ॥

**सामान्यच्छललक्षणम्**

**सम्भवतोऽर्थस्यातिसामान्ययोगादसद्भूतार्थकल्पना सामान्यच्छलम् ॥**

अतिव्यापकं सामान्यमतिसामान्यम्, तद्योगात् तत्सम्भवात् क्वचिद् व्यक्तार्थस्य कस्यचित् संभवतः संभाव्यमाननिष्पत्तेर्वक्त्राभिहितस्य सतो या असद्भूतार्थकल्पना वक्तुरनभिप्रेतातिसामान्यहेतुत्वकल्पना तया च प्रत्यवस्थानम्, तत् सामान्यनिमित्तं छलं सामान्यच्छलम् ।

---

**ब्राह्मणान् भोजयत्यादौ तद्बालेन शिक्षितमिति ।........**

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

यथा क्वचिदुचितोपचारवचनाराध्यमानगुणवद्ब्राह्मणकुले तत्कथाबहुले राजकुले कश्चित् सुजन्मा कञ्चिदग्रजन्मानं स्तौति 'अहो नु खल्वसौ ब्राह्मणो विद्याचरणसम्पन्नः' इति, तस्मिन् प्रसङ्गे तथाविध एवापरस्तमुत्साहयन् कथयति 'सम्भवति ब्राह्मणे विद्याचरणसम्पद्' इति, तत्र पिशुनश्छलवाद्याह यदि ब्राह्मणे विद्याचरणसम्पत् सम्भवति तर्हि व्रात्येऽपि ब्राह्मणत्वजात्यनपनयनात् सम्भवेदिति तत्रेदमतिव्यापकं ब्राह्मणत्वसामान्यं यतो विद्याचरणसम्पदमत्येति च स्पृशति तद्योगाद् ब्राह्मणव्यक्तौ सम्भवतो विद्याचरणसम्पद्रूपस्यार्थस्य वक्त्राभिहितस्य सतस्तत्र वक्त्रभिमतामेवातिसामान्यहेतुतामारोप्यच्छलवादी प्रत्यवतिष्ठत इति ।

अत्रोत्तरम्, केन ब्राह्मणत्वस्य हेतुत्वमभिहितं यदनैकान्तिकीकुर्वन् प्रत्यवस्थितोऽसि ? सम्भावनावचनमिदं स्तुत्यर्थमुपन्यस्तम् । विद्याचरणसम्पदः पात्रं हि ब्राह्मणाः, सति ब्राह्मणत्वे पूर्वजन्मोपचितसुकृतपरिणामाद् भवति विद्याचरणसम्पत्, न तु तदेव तस्या हेतुरिति । यथा सम्भवन्त्यस्मिन् क्षेत्रे शालय इति क्षेत्रप्रशंसापरे वाक्ये प्रयुक्ते नैवं वक्तुमापद्यते, यदि क्षेत्रमेव शालिसम्भवहेतुस्तत्र विनापि हलबलीवर्दादिसामग्र्या महत्यवग्रहेऽपि शालयोऽस्मिन् सम्भवेयुरिति । तदिदमर्थवादादिगत्यनभिज्ञस्य भवतो भाषितमित्यास्तामेतत् ।

इदन्तु भवन्तं पृच्छामि भो महात्मन् !

स्वभावशुद्धा परिनिश्चितार्थसंस्पर्शिनी पुण्यसहस्रलभ्या ।
केनेदृशी सर्वजनानुकूला कल्याणिनी ते निरमायि वाणी ।।

## उपचारच्छललक्षणम्

**धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ।।**

अभिधानस्य धर्मोऽनेकप्रकारो मुख्यया वृत्त्या गौण्या वा लाक्षणिक्या वा । यदर्थे प्रत्यायनं तदनेन विकल्पमानेन धर्मेण गौणेन लाक्षणिकेन वा निर्देशे प्रयोगे कृते योऽर्थसद्भावप्रतिषेधो मुख्यार्थनिषेधः स उपचारनिमित्तं छलमुपचारच्छलम् ।

---

**केनेदृशी सर्वजनानुकूलेति........**

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

यथा मञ्चाः क्रोशन्तीत्युक्ते छलवाद्याह कथमचेतनाः काष्ठरचनात्मानो मञ्चाः क्रोशन्ति ? मञ्चस्थाः पुरुषा एते क्रोशन्ति न मञ्चा इति ।

अत्र समाधिः, वृद्धव्यवहाराच्छब्दार्थव्युत्पत्तिः । तत्र न केवलयैव मुख्यया वृत्त्या शब्दाः प्रवर्तमाना दृश्यन्ते, वृत्त्यन्तरव्यवहारस्यापि सुप्रवर्तितत्वात् । न च निर्निमित्तमेव परशब्दं परत्र प्रयुक्तवन्तो वयम् । सहचरणादिसूत्रनिवेदित-निमित्तनिकुरुम्बान्यतमनिमित्तपूर्वकत्वादस्य प्रयोगस्य स्थानादयं तद्वदुपचारः ।

सत्यम्, गौणलाक्षणिकादिशब्दप्रयोगावगतिबाह्य एव य एवं प्रत्यवतिष्ठते । गौणलाक्षणिकयोः कथं विशेष इत्येतत् कथ्यताम् । सत्यम्, गोशब्दः स्वार्थम-भिधाय सास्नादिमन्तं तदीयान् गुणानेव जाड्यमान्द्यादीन् न मूत्रादीन् लक्षयति, न तावत्येव विरमति, स तु सामानाधिकरण्येन वाहीकेऽपि प्रवर्तते, गौर्वाहीक इत्येवं प्रयुज्यमानः स गौणो भवति । यस्तु स्वार्थाभिधानानन्तरं तदितरमर्थं गुणमगुणं वा लक्षयत्येव न सामानाधिकरण्येन परत्र प्रयुज्यते शब्दः, स लाक्षणिको भवति गङ्गायां घोषः प्रतिवसतीति । यथा चोक्तम् 'गौणे हि प्रयोगो न लक्षणायाम्' इत्यलं शास्त्रान्तरोद्गारगहनाभिः कथाभिः ।

मुख्यमर्थमथ लाक्षणिकं वा गौणमप्यवगमय्य च शब्दः ।
लोकवेदविहितं व्यवहारं सन्तनोति तदभिज्ञमतीनाम् ॥

---

**सहचरणादिसूत्रनिवेदितेति** । 'सहचरण-स्थान-तादर्थ्य-वृत्त-मान-धारण-सामीप्य-योग-साधनाधिपत्येभ्यो ब्राह्मण-मञ्च-कट-राज-सक्तु-चन्दन-गङ्गा-शाटकान्न-पुरुषेष्वतद्भा-वेऽपि तदुपचारः ॥' इति । सर्वत्र यष्टिसाहचर्याद् यष्टिर्ब्राह्मणः । मञ्चस्थाः पुरुषाः । कटार्था वीरणाः कटशब्देनोच्यन्ते । वृत्ताद् यमो राजा इति । आढकमिताः सक्तव आढकशब्द-वाच्याः । तुलया धृतं चन्दनं तुलाचन्दनम् । गङ्गायाः समीपे गङ्गायाम् । कृष्णेन गुणेन शाटकः कृष्ण इति । साधनाद् अन्नं प्राणा इति । कुलाधिपत्याद् अयं पुरुषः कुलमित्यु-च्यते ।

**स तु सामानाधिकरण्येन बाहीकेऽपि प्रवर्तत** इति । बाहीकं विशिष्टगुणसम्ब-न्धेनान्यस्मात् पुरुषादवच्छेत्तुमिति । **गौणे हि प्रयोगो न लक्षणायामिति** प्रभाकरलघु-टीका । यस्य वाहीकस्य जाड्यादिगुणं प्रतिपादयति गोशब्दस्तस्य सामानाधिकरण्येन

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

